❀ मिथिला-ग्रन्थमालायाः विंशतितमं (२०) प्रसूनम् ❀

अथ

# वर्षकृत्य-प्रथमभागः

'इन्दुमती' टिप्पणीभिर्विभूषितः

सम्पादकः

पण्डित श्रीरामचन्द्रझा व्याकरणाचार्यः

संशोधक—पण्डित श्रीदेवनारायणझा

चौखम्बा विद्याभवन, चौक, पो० बा० १०६९, वाराणसी

संस्करण : 2017



मूल्य : 230.00

## आशिषाऽभिनन्दनम्

चञ्चच्चन्द्रमरीचिचारुवदनी बिम्बोष्ठकान्तामणि

भक्तिज्ञानप्रसादिताशुगिरिजा संराजमानाननाम् ।

तुच्छां स्वच्छमना निधाय हृदये पत्युः समक्षं मुदा

तीर्थद्वार 'प्रयाग' देवसरितस्तीरे वपुर्या जहौ ॥

सद्यं स्वर्गसुधागलन्मधुरतां मन्दं पिबन्तीत्यहो !

स्वीयोत्पत्तिसुकीर्तिपूतमिथिला सीतासमा धीमती ।

नाम्ना 'चेन्दुमती' प्रसन्नवदना दिव्यप्रभावा चिरं

लोकानामनुरञ्जनी विलसतु स्वर्गे सुधावर्षिणी ॥

व्यथित-रामचन्द्रः

# आत्म-निवेदन

'तरुवनी' नगराधिनिवासिना सुकुलसारस-सन्ततिभानुना ।

सुहृदनन्तकनिष्ठप्रसूनुना धरणिजापदयोरयमर्प्यते ॥

द्वादशमासीय कृत्य में शा० दुर्गापूजा तथा श्यामा ( काली ) पूजाक विशेष महत्त्व देखि चतुर्थ संस्करण में यथा-स्थान ई वृहत् पद्धति तथा द्वितीय भाग में एकरा स्थान पर सर्वदेवीप्रतिष्ठा आदि छापल गेल अछि ।

'तप्तमुद्राङ्कन-समीक्षा' स्वनामधन्य रामानुजी विद्वान् श्री प० रामदेव जी शुक्ल, एक पुस्तक में हमर समीक्षाक आर्षवचनक उटपटांग अर्थ करैत तथा किछु वचन ( जतय हुनक विद्वत्ताक वश नहि चललैन्ह, ओहि वचने ) कें हमर कपोल-कल्पित नवीनतम रचना कहि आत्मसन्तोष व्यक्त कयलैन्ह अछि । तदर्थ हुनक प्रत्युत्पन्न मतिक हम आभारी छी ।

चतुर्थ संस्करणक 'इन्दुमती' टिप्पणी में प्रतिहारषष्ठी ( छठि ), जीमूतवाहन ( जितिया ) आदि व्रतनिर्णय पर विशेष विचार प्रस्तुत करबाक इच्छा छल, मुदा मैथिल-संस्कृतिक अखण्डोपासक एक मिथिला महोमान्य मनीषी अपन आत्मीयता प्रकट करैत हमरा लिखलैन्ह जे—'यदि व्रतनिर्णय पर अहाँ, जे छपल अछि ओहि सँ वेसी लिखब तँ अनिष्ट भय जाएत ।'' ई पत्र पढ़ि हम अवाक् रहि गेलहुँ । अस्तु ।

गप-शपक प्रसंग में हम विद्वान् कें अपन सुझाव देत छियैन्ह जे—तिथिनिर्णय आ व्रतनिर्णय भिन्न-भिन्न विषय थीक—तिथिनिर्णयक आधार पर व्रतनिर्णय नहि करू ?—व्रतनिर्णय में तत्तत् पौराणिक वचने मापक थीक । मैथिल-विद्वच्छिरोमणि म० म० रजे मिश्र जी अपना 'तिथिनिर्णय'क अन्तमें स्पष्ट लिखलैन्ह अछि जे—''व्रतनिर्णयः, शुद्धिनिर्णयः, तीर्थनिर्णयश्च यथावकाशं प्रकाशमेष्यन्तीति ।'' ( देखू, पृ० ५२६ )

न्तरम्। ततो मातामहादीनामन्वष्टक इति क्रमः॥ तथा च प्रथमं पित्रादित्रयाणां, ततो मात्रादितिसृणां, ततो मातामहादित्रयाणामेवं नवपुरुषश्राद्धमन्वष्टकायां भवतीति वेद्यम्।

## अथ गजच्छायायोगः

आश्विनकृष्णत्रयोदश्यां मघायुक्तायां हस्तनक्षत्रगते सूर्ये गजच्छाया भवति। तथाहि वायुपुराणे—'हस्ते सूर्यस्थिते या तु मघायुक्ता त्रयोदशी। तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु॥' अन्यच्च—'कृष्णपक्षे त्रयोदश्यां मघास्विन्दौ करे रविः। यदा तदा गजच्छाया (१) श्राद्धे पुण्यमवाप्यते॥' अत्र वारनियमो नास्ति प्रापकाऽभावात्। दिवस एवैतादृशयोगे गजच्छाया न तु रात्रौ। तथाहि महाभारते—'दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन॥' इति।

---

नभ्याः। वस्तुतस्तु केवल मात्राद्युद्देश्यकं ब्राह्मणभोजनमपि श्राद्धशब्देन अभिधीयते। तथाहि—

हेमाद्रिः—होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम्। श्राद्धशब्दाऽभिधेयं स्यादेकस्मिन्नौपचारिके॥ इति। एवं च मातृनवमीनिमित्तकं केवलं ब्राह्मणभोजनमपि पूर्वाह्णे एव कर्तव्यमिति तत्त्वविदः। व्यवहारोप्ययमेव प्रायः।

(१) ज्येष्ठपुत्रवता पिण्डरहितमेव श्राद्धमत्र कर्तव्यम्। मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यतीत्यनिष्टश्रवणात्। ज्येष्ठपदमत्र सर्वज्येष्ठपरमिति 'रसमाला।

अत्र मधुघृतयुतपायसेन श्राद्धम् तथाहि पितॄणामुक्तिः—

'सोऽस्माकं न कुले जायाद्यो न दद्यात् त्रयोदशीम्। पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च॥' इति।



## शारदीय-दुर्गापूजानिर्णयः

### (१) शारदीय-दुर्गापूजा-प्रशंसा

भविष्ये—एकभक्तेन नक्तेन तथैवाऽऽयाचितेन च। पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे॥
गृहे गृहे शक्तिपरे ग्रामे ग्रामे वने वने। स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः॥
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः। सम्यक् कल्पोदितां पूजां यदि कर्तुं न शक्नुयात्॥
उपचारांस्तथा दातुं पञ्चैतान् वितरेत्तदा। गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च॥
अभावे पुष्प-तोयाभ्यां तदभावे तु भक्तितः।

### (२) चण्डिकार्चने प्रतिपत्तिथिनिर्णयः—

नन्दिकेश्वरः—भगवत्याः प्रवेशादि-विसर्गान्ताश्च याः क्रियाः। रवेरुदयगामिन्यां ताः सर्वाः कारयेद् बुधः॥
तिथिचिन्ता०—अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने। मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता॥
(दिनमानस्य पञ्चदशो विभागो मुहूर्तः, तेनाऽन्यूना मुहूर्तमात्रेत्यर्थः। (मुहूर्तं घटिकाद्वयमेकं वेति राद्धान्तः। तन्न्यूनत्वे तिथिमलत्वे च त्याज्या। तथा हि—

स्मृतिः—षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे। अकर्मण्ये तिथिमलं विद्यादेकादशीं विना॥
देवीपुराणे—आद्या षोडशनाडीस्तु लब्ध्वा यः कुरुते नरः। कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम्॥
प्रातरावाहयेद् देवीं प्रातरेव प्रवेशयेत्। प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत्॥
यदा क्षयवशाद् अमायुक्तैव प्रतिपद् तथा अमायुक्तैव ग्राह्या। तथा हि—
लल्लस्मृतिः—तिथिः शरीरं तिथिरेव कारणम्। तिथिः प्रमाणं तिथिरेव साधनम्॥

( ३ ) मूलनक्षत्रे महादेव्याः ( सरस्वत्याः ) स्थापनम्—

देवीपुराणे—मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम्। उत्तरासु बलिं दद्याच्छ्रवणेन (१) विसर्जयेत्॥
रुद्रयामले—मूलऋक्षे सुराधीश पूजनीया सरस्वती। पूजयेत् प्रत्यहं देव यावद् वैष्णवमृक्षकम्॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन। पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः॥

( ४ ) महाष्टमी-व्रतनिर्णयः—

देवलः—व्रतोपवासनियमे घटिकैकापि या भवेत्। सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके॥
स्मृतिसंग्रहे विशेषः—शरन्महाष्टमी पूज्या नवमीसंयुता सदा। सप्तमीसंयुता नित्यं शोकसन्तापकारिणी॥
ति० नि० वाचस्पतिः—सप्तमी-शल्यसंयुक्तां मोहादज्ञानतोऽपि वा। महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते॥
सप्तमी कलया यत्र परतश्चाष्टमी भवेत्। तेन शल्यमिदं प्रोक्तं पुत्रपौत्रक्षयप्रदम्॥
देवीपुराणे—सप्तमी-वेधसंयुक्ता यैः कृता तु महाष्टमी। पुत्रदारधनैर्हीना रटन्तीह पिशाचवत्॥
भुवनप्रदीपे—एकस्यैव तु खण्डस्य समस्ते भास्करोदयः। त्रिमुहूर्ते भवेत् पूर्णः स कालो वेधसंज्ञकः॥
जाबालिः—यदा सूर्योदये न स्यादष्टमी च परेऽहनि। तदाऽष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप॥
निर्णयामृते—उत्तरास्तिथयो यत्र क्षयं यान्ति नराधिप। तदा पूर्वाऽष्टमी कुर्यादन्यथा त्वशुभं भवेत्॥

---

( १ ) अन्यच्च—'मूलेनावाहयेद् देवीं श्रवणेन विसर्जयेत्।' श्रवणस्य आद्यपादे देवीविसर्जनं, तथाहि—
पुराणे—आदिभागो निशायां तु श्रवणस्य यदा भवेत्। सम्प्रेषणं तदा देव्या दशम्यां च महोत्सवः।



( ५ ) महाष्टम्यां निशापूजानिर्णयः—

समयप्रदीपे—रात्रिकृत्येषु सर्वेषु रात्रियोगः प्रशस्यते। दिवाकृत्ये दिवायोगो भास्करोदयसङ्गतः॥
स्कान्दे—अष्टमीयुक्तकाले तु निशार्धे परमेश्वरीम्। समभ्यर्च्य बलिं दद्यात् सर्वाभीष्टफलाप्तये॥
कृत्यमहार्णवे—पूर्वेद्युरपरेद्युश्चेन्निशीथव्यापिनी तिथिः। परेद्युरेव सा ग्राह्याऽष्टमी न सप्तमीयुता॥
अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता। अतीव सा प्रशस्ता स्याद् देव्याः पूजनकर्मणि॥

यत्र पूर्वदिने एव महानिशाव्यापिनी अष्टमी, तत्र सप्तमीयुतैव ग्राह्या तथाहि विश्वरूपनिबन्धे—

भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया। तस्माद् वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः॥
आश्विनस्य सिताऽष्टम्यामर्धरात्रे तु पार्वती। भद्रकाली समुत्पन्ना पूर्वाषाढासमायुता॥
तत्राऽष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी॥
महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी। सप्तम्या संयुता कार्या मूलेन तु विशेषतः॥
महाष्टम्यां भगवती भद्रायामपि पूजिता। ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी॥

उभयदिने महानिशिथव्यापित्वाभावे परदिने एव। तथाहि योगिनीतन्त्रे—

उभयत्र दिने न स्यान्निशीथव्यापिनी यदा। तथा परैव संग्राह्या रवेरुदयगामिनी॥

( ६ ) महानवमी-व्रतनिर्णयः—

ब्रह्मवैवर्ते—अष्टम्या नवमीविद्धा कर्तव्या फलकांक्षिभिः। न कुर्यान्नवमीं तात दशम्यां तु कदाचन॥
पाद्मे—श्रावणी दुर्गनवमी दूर्वा चैव हुताशिनी। पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम्॥

दुर्गापूजासु मूलादिनक्षत्रसंयुता नवमी अतिप्रशस्ता, तथाहि—

भविष्ये—अश्वयुक् शुक्लपक्षे तु अष्टमी मूलसंयुता। सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा॥
स्कान्दे—दुर्गापूजासु नवमी मूलाद्-ऋक्षत्रयान्विता। महती कीर्तिता तस्यां दुर्गा महिषवाहिनी॥
न कुर्यान्नवमी तात दशम्यां तु कदाचन॥

पूर्वेद्युः पूर्वाह्णे मध्याह्ने अपराह्णे वा मूलादिनक्षत्रसमन्वितायां नवम्यां सत्यां परेद्युः दशमीविद्धां विहितनक्षत्ररहितां नवमीं न कुर्यात्, तथाहि देवीपुराणेऽपि—

अश्वयुक् शुक्लनवमी मुहूर्तं वा कला यदि। सा तिथिः सकला ज्ञेया लक्ष्मी-विद्या-जयार्थिभिः॥

### ( ७ ) महानवमी-बलिदाननिर्णयः—

यो० तन्त्रे—पूर्वाह्णे ह्यष्टमी चैव मध्याह्ने नवमी तिथिः। उत्तरर्क्ष-समायुक्ता बलिदाने प्रशस्यते ( १ )॥
दिनद्वयेऽपि चेन्न स्याद् ऋक्षयोगं कथञ्चन। केवलायां नवम्यां तु बलिं दद्यात् तदा ( नक्षत्राभावे ) परे॥
देवीपु०—उत्तरेण नवम्यां ( २ ) तु बलिभिः पूजयेत् शिवाम्। योगाऽभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि॥

---

( १ ) बलिदाने तु नक्षत्रस्यैवातिप्राशस्त्यमुक्तम्। मूलादिविहितनक्षत्रसमन्वितायामसत्यामेव दशमीविद्धा नवमी ग्राह्येति सर्वनिबन्धस्वरसः। अत एव उक्तमग्रे "दिनद्वयेऽपि चेन्न स्यात्……"

( २ ) मूलादिविहितनक्षत्रसमन्वितायां सत्याम् एव 'उत्तरेण नवम्यामि'ति भावः। अत उक्तमत्रैव अग्रे 'योगाऽभावे' इति। पूर्वदिने नक्षत्रयोगाभवे इति भावः। पूर्वदिने मूलादिविहितनक्षत्राऽभावे एव परदिने दशमीविद्धा नवमी ग्राह्येत्यर्थः। तदुक्तं मूले ( पृ० १२३ )—'सौरधर्मे—'सूर्योदये परा रिक्ता…… ……' इति।



सौरधर्मे—सूर्योदये परा रिक्ता पूर्णा स्यादपरा यदि। बलिदानं प्रकर्तव्यं तत्र देशे शुभं भवेत्॥
यत्तु—अत्राऽपराह्णिके काले बलिदानं प्रशस्यते। दशमीं वर्जयेत् तत्र नात्र कार्या विचारणा॥

इति ब्रह्मवैवर्त्तोक्त्या 'बलिदानविधिस्त्वपराह्णे प्रशस्तः' इत्युक्तं तस्याऽयं भावः—'अत्राऽपराह्णिके'' इत्यत्र 'अत्र' पदेन "उत्तरादिविहितनक्षत्रयुक्ते काले एव" प्रशस्तः। अतएव उक्तं मूले योगिनीतन्त्रे—पूर्वाह्णे····बलिदाने प्रशस्यते॥'
देवीपुराणेऽपि—अश्वयुक् शुक्लनवमौ मुहूर्तं वा कला यदि। सा तिथिः सकला ज्ञेया लक्ष्मी-विद्या-जयार्थिभिः॥

( अत्र सुहृद्वर श्री प० गङ्गाधरझामहोदयैस्तु स्वरचित-'महानवमीव्यवस्थासारसमुच्चय' नामकनिबन्धे उत्तम-मध्यम-अधम-भेदेन महानवमीप्रयुक्तबलिदानस्य भेदत्रयं, प्रभूततरबलिदान-पूजाङ्गबलिदानयोः पार्थक्यं च बहुशः प्रतिपादितमिति तत्रैव द्रष्टव्यम्। )

### ( ८ ) विजयादशमी-निर्णयः—

नारदः—सूर्योदये यदा राजन् दृश्यते दशमीतिथिः। आश्विने मासि शुक्ले तु विजयां तां विदुर्बुधाः॥
हेमाद्रौ—उदये दशमी किञ्चित् सम्पूर्णैकादशी यदि। श्रवणर्क्षं यदा काले सा तिथिर्विजयाऽभिधा॥
नन्दिकेश्वरः—प्रातरावाहयेद् देवीं प्रातरेव प्रवेशयेत्। ततः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत्॥
व्यासः—व्रतोपवास-दानादौ घटिकैका यदा भवेत्। तामेव तिथिमाश्रित्य कुर्यात् कर्मण्यतन्द्रितः॥
ज्योतिर्निबन्धे—ईषत् सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः। विजयो नाम कालोऽयं सर्वकार्यासिद्धिदः॥
कश्यपः—श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः। उल्लंघयेयुः सीमान्तं तद्दिनर्क्षे ततो नरः॥

### ( ९ ) विजयादशम्यामपराजितापूजानिर्णयः—

घटिकामात्रे दशमीयुक्तकाले स्वल्पविधिनाऽप्यपराजिता पूजा कार्या, न त्वेकादश्याम्। तथा हि—श्रवणर्क्षं-

समोपेता भास्करोदयगामिनी । तत्राऽल्पार्चां विधायैव प्रणिपत्य विसर्जयेत् ॥ तत्रोदयगामिनी त्रिमुहूर्तव्यापिनी ज्ञेया । तथा च व्यासः—एकस्यैव तु खण्डस्य समस्ते भास्करोदयः । त्रिमुहूर्ते भवेत् पूर्णः स कालो वेदसंज्ञकः ॥ यदि परदिने घटिकान्यूना दशमी चेत्तदा पूर्वदिने नवमीविद्धायां दशम्यामेवाऽपराजितापूजा कार्या । तदुक्तं—घटिकातो यदा न्यूना दशमी स्यात् परेऽहनि । पूर्वेद्युस्तु तदा देवी पूजयित्वा विसर्जयेत् ॥ दशम्यां च बली राजा पूजयित्वाऽपराजिताम् । दशदिक्षु मनोयोगाद्यात्रां कृत्वाऽथवा नृपः ॥ इति पुराणाद् राजा चेदिमां पूजां कुर्यादित्येकदेशिनः । कश्यपः—श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः । उल्लंघयेयुः सीमान्तं तद्दिनर्क्षे ततो नरः ॥

### ( १० ) मरणाद्याशौचे दुर्गापूजानिर्णयः

विश्वरूपनिबन्धे—आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके । शवाशौचे समुत्पन्ने क्रिया कार्या कथं बुधैः ॥ सूतके वर्तमाने च तत्रोत्पन्ने सदा बुधैः । देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः ॥ सूतके पूजनं प्रोक्तं दानं चैव विशेषतः । देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते ॥ आश्विनशुक्लप्रतिपदादि-षष्ठ्यादि-सप्तम्यादि चैकं कर्म, अतश्च तन्मध्ये अशौचपातेऽपि न दोषः । तथा हि विष्णुः—आरब्धे सूतकं न स्यादनारम्भे तु सूतकम् ॥ अत्रारम्भ उक्तो हारीतेन—आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

### ( ११ ) परकर्तृक-दुर्गासप्तशती-पाठसङ्कल्पः—

ॐ अद्य आश्विने मासि शुक्ले पक्षे अमुकगोत्रस्य मम श्री अमुकशर्मणः सपरिवारस्य सर्वबाधाप्रशमन-सकलदुष्कृतनिवृत्ति–दुष्कृतोत्थसमस्तापच्छून्यत्व–दारिद्र्यानुत्पत्तीष्टवियोगराहित्यसार्वदिक–शत्रु–दस्युराजशस्त्रा–ऽनल-तोयौघहेतुक–भयाभाव-महामारीसमुद्भवा-ऽशेषोपसर्ग–त्रिविधोत्पातशमन-सतत-श्रीदुर्गासांनिध्यधन-धान्य-



सुतान्वितत्व—युद्ध–पराक्रमनिर्भयत्वभवन–सकलरिपुक्षयकल्याणोत्पत्ति–स्वकुलानन्द–दारुणग्रहपीडाशान्ति-दुःस्वप्न–सुस्वप्नोत्पत्ति - नृसंघातभेद–मैत्रीकरणा-ऽशेषदुर्वृत्तान्तिक-बहलानि - रक्षोभूत-पिशाचनाशनारोग्यशुभमतित्व–सर्वसंकट-विमुक्ति-स्वावधिकहिंसादि-दस्युवैरिदूरपलायनकामोऽद्यारभ्य नवमीपर्यन्तं श्रीमार्कण्डेयपुराणान्तर्गत—'मार्कण्डेय उवाच—'सावर्णिः सूर्यतनय' इत्यादि 'सावर्णिर्भविता मनुः' इत्यन्तं देवीमाहात्म्यं ब्राह्मणद्वाराऽहं पाठयिष्ये ।

### ( १२ ) स्वकर्तृक-सप्तशती-पाठसंकल्पः—

ॐ अद्य आश्विने मासि शुक्ले पक्षे प्रतिपत्तिथौ अमुगोत्रस्य मम श्री अमुकशर्मणः सकलदुष्कृतिनिवृत्ति–दुष्कृतोत्थसमस्तापच्छून्यत्व - मनोऽभीप्सितसिद्धि-दीर्घायुष्ट्वराजप्रसादपूर्वक - सर्वविधसौमनस्य - सदायुद्ध–विजयकामोऽद्यारभ्य-नवमीपर्यन्तं मार्कण्डेयपुराणान्तर्गत–'मार्कण्डेय उवाच—सावर्णिः सूर्यतनय' इत्यरभ्य 'सावर्णिर्भविता मनुः' इत्यन्तं देवीमाहात्म्यपाठमहं करिष्ये ।

### ( १३ ) मैथिलेतराणां प्रतिज्ञासकल्पः—

ॐ विष्णुर्विष्णुर्विष्णुः, नमः परमात्मने श्रीपुराणपुरुषोत्तमाय । अद्य श्रीब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे जम्बूद्वीपे भरतखण्डे आर्यावर्तान्तिर्गतब्रह्मावर्तैकदेशे ( अमुक ) स्थाने वर्तमाने ( अमुक ) नामसंवत्सरे ( अमुक ) हायने महामाङ्गल्यप्रदे मासोत्तमे 'मासे' आश्विनमासे शुक्ले पक्षे प्रतिपत्तिथौ ( अमुक ) वासरे ( अमुक ) गोत्रोत्पन्नः ( अमुक ) शर्माऽहं मम ( यजमानपक्षे—अमुकगोत्रोत्पन्नस्य अमुकनाम्नो यजमानस्य ) सर्वाभीष्टसिद्ध्यर्थम् आयुरारोग्यैश्वर्यादिवृद्ध्यर्थं सर्वदा हर्षविजयकामनासिद्ध्यर्थं श्रीमहाकाली-महालक्ष्मी-महासरस्वती-देवताप्रीत्यर्थं सर्वापन्निवारणार्थम् ( अर्गलाकीलकवचादि-सहितम् ) मार्कण्डेयपुराणोक्तं मार्कण्डेय उवाचे'तिपूर्वकसावर्णिः सूर्यतनय इत्यारभ्य सावर्णि-

भविता मनुः ॐ' इत्यन्तं रात्रिसूक्तादि-देवीसूक्तान्तम् आदावन्ते च अष्टोत्तरशतं नवार्णमन्त्रसम्पुटितम् ( अमुक-मन्त्रेण सम्पुटितं वा ) सप्तशतीस्तवपाठम् अन्ते रहस्यत्रयपठनं च करिष्ये ( परकृतपक्षे 'करिष्यामि' )
इति संकल्प्य—ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥
इति पुस्तकपूजनम् ।

ततः शापोद्धारमन्त्रं सप्तवारं जपेत्—

ॐ ह्रीं क्लीं श्रीं क्रां क्रीं चण्डिके देवि शापानुग्रहं कुरु कुरु स्वाहा ।

ततः उत्कीलनमन्त्रं २१ वारं जपेत्—

ॐ श्रीं क्लीं ह्रीं सप्तशति चण्डिके उत्कीलनं कुरु कुरु स्वाहा ॥

### ( १४ ) चण्डीपाठमाहात्म्यम्

वाराहीतन्त्रे—चण्डीपाठफलं देवि शृणुष्व गदतो मम । ग्रहोपशान्त्यै कर्तव्यं पञ्चावृत्तं वरानने ॥ महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत् । अर्कावृत्तेः काम्यसिद्धिर्वैरिहानिश्च जायते ॥ मन्त्रावृत्त्या रिपुर्वश्यस्तथा स्त्री वश्यतामियात् । सौख्यं पञ्चदशावृत्ताच्छ्रियमाप्नोति मानवः ॥ कलावृत्तात् पुत्रपौत्रधनधान्यादिकं विदुः । राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च ॥ कुर्यात् सप्तदशावृत्तं तथाऽष्टादशकं प्रिये । महात्राणविमोक्षाय विंशावृत्तं पठेन्नरः ॥ पञ्चविंशावर्त्तनाच्च भवेद्‌बन्धत्रिमोक्षणम् । सङ्कटे समनुप्राप्ते दुश्चिकित्सामये तथा ॥ जातिध्वंसे कुलच्छेदे आयुषो नाश आगते । वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥ तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्याद्यत्नाच्छतावृत्तं ततः सम्पद्यते शुभम् ॥ श्रियो वृद्धिश्शतावृत्ताद्‌दायुवृद्धिस्तथा प्रिये । मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् ॥ शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते । सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा॥



भुक्त्वा मनोरथान् सर्वान् नरो मोक्षमवाप्नुयात् । यथाश्वमेधः क्रतुराड् देवानां च यथा हरिः ॥ स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः । अथवा बहुनोक्तेन किमेतेन वरानने ॥ चण्ड्याः शतावृत्तिपाठात् सर्वाः सिद्ध्यन्ति सिद्धयः ॥

### ( १५ ) चण्डीपाठविधिः

वाराहीतन्त्रे—न मानसं पठेत् स्तोत्रं (१) वाचिकं तु प्रशस्यते । पुस्तके वाचनं शस्तं शहस्रादधिकं यदि ॥
ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना । सकामैः सम्पुटो जाप्यो निष्कामैः सम्पुटं विना ॥
चरितं मध्यमं चैव जपेद्वा चण्डिकाद्वयम् । एकेन वा मध्यमेन नैकेनेतरयोरिह ॥
चरितार्धं न तु जपेज्जपेच्छिद्रमवाप्नुयात् । यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत् सुधीः ॥
यदि प्रमादादध्याये विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत् सर्वमुदारधीः ॥
आधारे स्थापयित्वा तु पुस्तकं वाचयेत् सुधीः । हस्ते संस्थापनाद् देवि हन्त्यर्धं हि फलं (२) यतः ॥

---

( १ ) शिक्षायाम्—गीती शीघ्री शिरःकम्पी तथा ( स्व ) लिखितपाठकः अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाऽधमाः ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थश्च षडेते पाठका गुणाः ॥

( २ ) तिथिचिन्तामणौ प्रतिपदादिनवम्यन्तपाठकस्त्वयम्—

'ऋषिच्छन्दोऽन्वितं न्यस्य पठेत् स्तोत्रं विचक्षणः । स्तोत्रं न दृश्यते यत्र प्रणवं तत्र विन्यसेत् ॥ सर्वत्र पाठो विज्ञेयश्चान्यथविफलं भवेत् ॥'

# अथ शारदीय-दुर्गापूजापद्धतिः

## अथ स्वस्तिवाचनप्रयोगः

ॐ महाकाली-महालक्ष्मी-महासरस्वतीभ्यो नमः। दुर्गाभक्तितरङ्गिण्यादिप्रामाणिकनिबन्धमनुसृत्य श्रीदुर्गोत्सवविधानस्य (१) प्रयोगो लिख्यते। अथाश्विनशुक्लप्रतिपत्तिथौ स्नातः कृतनित्यक्रियो यजमानः पूजास्थानमागत्य ब्राह्मणद्वारा स्वयं वा स्वस्त्ययनं कुर्यात्। तद्यथा—ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्तिः नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॐ स्वस्ति नो मिमीतामाश्विना भगः स्वस्ति देव्यदितिरनर्वणः। स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना। स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः। बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः। विश्वेदेवा नो ऽअद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये। देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः। स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति। स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो ऽअदिते कृधि। ॐ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव। पुनर्ददताघ्नता जानता सङ्गमेमहि। ॐ स्वस्त्ययनं ताक्ष्यमरिष्टनेमि महद्भूतं वायसं देवतानाम्। असुरघ्नमिन्द्रसखं समत्सु बृहद्यशोनावमिवारुहेम। ॐ अंहो मुच मांगिरसं गयञ्च स्वस्त्यात्रेयं मनसा च ताक्ष्यम्। प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो ऽअस्तु। ॐ सोमं राजानं वरुणमग्निमन्वारभामहे आदित्यं विष्णुं सूर्यं

(१) बृहत्सारे—आश्विनस्य सिते पक्षे नानाविधमहोत्सवैः। प्रसादयेयुः श्री दुर्गां चतुर्वर्गफलार्थिनः। पुनश्च तत्रैव—शरत्कालीनपूजां ये कर्तारो भक्तिभाविताः। तेषां दारान् सुतान् भोगान् वित्तमारोग्यमुन्नतिम्। तुष्टा दास्याम्यहं शम्भो स्वर्लोके वसतिं सदा॥ (वैष्णवानां शारदीयदुर्गापूजाविधिः अग्रे १८५ पृष्ठे द्रष्टव्यः)





ब्रह्माणं च बृहस्पतिम्। ॐ गणानान्त्वा गणपतिँ हवामहे प्रियाणान्त्वा प्रियपतिँ हवामहे निधीनान्त्वा निधिपतिँ हवामहे व्वसो मम। आहम जानिगर्ब्भधमात्वमजासि गर्ब्भधम्। ॐ अम्बे अम्बिके ऽम्बालिके नमानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्। ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणा मुम्म इषाण सर्व्वलोकम्म इषाण। ॐ द्यौः शान्तिरन्तरिक्षँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्व्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वँ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि। यतो यतः समीहसे ततो नोऽ अभयं कुरु। शन्नः कुरु प्रजाभ्यो भयन्नः पशुभ्यः। ॐ शान्तिः शान्तिः शान्तिः।

## अथाऽन्यकर्तृकपक्षे वरणदानम्

यजमानः—पुष्प-चन्दन-ताम्बूल-कटिसूत्राङ्गरीयक-वाशोयुगादिवरणसम्भृतिमाय—ॐ अद्याश्विने मासि शुक्ले पक्षे प्रतिपत्तिथावमुकगोत्रः श्री अमुकशर्माहमद्यारभ्य विजयदशमीपर्यन्तं वार्षिकशरत्कालीनसाङ्गश्रीदुर्गापूजां कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवस्त्रयज्ञोपवीतकटिसूत्राङ्गरीयकैः पूजकत्वेन त्वामहं वृणे। ॐ वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहितं कर्म कुरु, इति यजमानेनोक्ते ॐ करवाणीति प्रतिवचनम्।

## अथ आसनशुद्धिः

कुशत्रयजलान्यादाय—ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः। ॐ पुण्डरीकाक्षः पुनातु। इति गङ्गाजलेन पञ्चगव्येन चात्मानं पूजोपकरणद्रव्यं सिक्त्वा कमलासने बद्धकमलासनः प्राङ्मुख उदङ्मुखो वा उपविश्य—ॐ रक्ष रक्ष हूँ फट् स्वाहा। इति मन्त्रेण आसनस्थानमभिषिच्य—ॐ पवित्रवज्रभूमे हुँ फट् स्वाहा। इति मन्त्रेण भूमिमभिमन्त्र्य—ॐ ह्रीं आधारशक्तिकमलासनाय नमः। इत्यासन-

मभ्यर्च्य आसनाधः रक्तचन्दनेन त्रिकोणयन्त्रं विलिख्य ॐ आसुरेखे वज्ररेखे हूँ फट् स्वाहा। इति मन्त्रेण मण्डलं विलिख्य 'ॐ ह्सौं' इति प्रेतबीजं मध्ये विलिख्य—ॐ ह्रीं आधाशक्तिकमलासनाय नमः। इति गन्धपुष्पाक्षतादिभिः सम्पूज्य—ॐ अनन्ताय नमः, ॐ विमलासनाय नमः, ॐ पद्मासनाय नमः, ॐ ह्सौं महाप्रेतपद्मासनाय नमः, इति सम्पूज्य आसनं धृत्वा पठेत्—ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां नित्यं पवित्रं कुरु चासनम्। इति प्रणमेत्। ततः ॐ वास्तुपुरुषाय नमः, ॐ ब्रह्मणे नमः, ॐ धर्माय नमः, ॐ ज्ञानाय नमः, ॐ वैराग्याय नमः, ॐ ऐश्वर्याय नमः। इति पूर्वादिक्रमेण गन्धपुष्पाक्षतैः सम्पूज्य एवं कोणेषु ॐ अधर्माय नमः, ॐ अज्ञानाय नमः, ॐ वैराग्याय नमः, ॐ अनैश्वर्याय नमः, ॐ दिशायै नमः, ॐ विदिशायै नमः। इति सम्पूज्य—ॐ रक्ष रक्ष हूँ फट् स्वाहा। ॐ आं हूँ फट् स्वाहा। इति पञ्चवारं व्यापकं विधाय। ॐ अस्त्राय फट्। इति मन्त्रेण वामपादाघातत्रयेण दिव्यदृष्ट्या भौमानन्तरिक्षगान् विघ्नानुत्सार्य ऊर्ध्वमधः तालत्रयं दत्त्वा छोठिकादिभिर्दशदिग्बन्धनं कृत्वा नाराचमुद्रया लाज-चन्दनाक्षत-दूर्वा-भस्मकुशानादाय—ॐ अपक्रामन्तु भूतानि पिशाचाः प्रेतगुह्यकाः। ये चात्र निवसन्त्यन्ये देवता भुवि संस्थिताः॥ ॐ अपसर्पन्तु ते भूता ये भूता भूमि संस्थिताः। ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया॥ ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः। मृत्युरोगभयक्रोधाः पतन्तु रिपुमस्तके॥ इति चतुर्दिक्षु। क्षिपेत्। इत्यासनशुद्धिः।

## अथ सामान्यार्घ्यस्थापनम्

स्वदक्षिणभागे विशुद्धजलेन भूमिं सम्प्रोक्ष्य, तत्र रक्तचन्दनसिन्दूरादिना मण्डलं कृत्वा तत्र चतुरस्रां रेखां विलिख्य तन्मध्ये त्रिकोणयन्त्रं च विलिख्य—ॐ आधारशक्तये नमः। इति पाद्यादिभिः सम्पूज्य तत्र—ॐ हः सामान्यार्घपात्रं स्थापयामि। इति स्वर्ण-रौप्य-ताम्राद्यन्यतमार्घपात्रं संस्थाप्य ओंकारेण जलं निधाय—ॐ गङ्गे च



यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥ ओं ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे। तेन सत्येन देवेश तीर्थं देहि दिवाकर॥ इति सूर्यमण्डलात् अंकुशमुद्रया तीर्थमावाह्य पुष्पाक्षतैः—ओं गङ्गादिसकलतीर्थेभ्यो नमः। ओं हृदयादिषडङ्गदेवताभ्यो नमः। ओं अँ आँ अर्कमण्डलाय द्वादशकलात्मने नमः, ओं इं वह्निमण्डलाय दशकलात्मने नमः, ओं ऊँ सोमण्डलाय षोडषकलात्मने नमः, इति सम्पूज्य तत्र मूलमन्त्रं ( ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ) प्रणवं वा दशधा जप्त्वा धेनुमुद्रया अमृतीकृत्य मत्स्यमुद्रया आच्छाद्य योनिमुद्रां प्रदर्श्य तज्जलेन पूजोपकरणम्, आत्मानञ्चाभिषिच्य विशेषार्घ्यस्थापनं कुर्यात्।

## अथ विशेषार्घ्यस्थापनम्

स्ववामभागे—'ओं आसुरेखे वज्ररेखे हूँ फट् स्वाहा' इति मन्त्रेण रक्तचन्दनसिन्दूरादिना त्रिकोणगर्भषट्कोणवृत्तचतुरस्रमण्डलं विलिख्य कुशैः—'ओं लँ' इति भुवमभिषिच्य—'ओं वँ' इति भुवं संमृज्य षट्कोणेषु हृदयादि षडङ्गं सम्पूज्य चतुरस्रे—'ओ पूर्णगिरिपीठाय नमः' इति पूर्वे, ओं उड्डीयानपीठाय नमः' इति दक्षिणे, 'ओं कामरूपपीठाय नमः' इति पश्चिमे, ओं जालन्धरपीठाय नमः' इति उत्तरे च सम्पूज्य—ओं आधारशक्तये नमः, ओं कूर्मशेषाभ्यां नमः। इति मध्ये। ओं आँ अर्कमण्डलाय द्वादशकलात्मने नमः। ओं ईं वह्निमण्डलाय दशकलात्मने नमः! ओं ऊँ सोममण्डलाय षोडशकलात्मने नमः इति पञ्चोपचारैः तत्तन्मण्डलं सम्पूज्य—'ओं ह्रीं फट्' इत्याधारपात्रं त्रिपदिकां संस्थाप्य—'ओं आधारपात्राय नमः' इति सम्पूज्य तदुपरि सौवर्णराजत-ताम्राद्यन्यतमपात्रं शङ्खं वा 'ओं अस्त्राय फट्' इति मन्त्रेण संस्थाप्य—'ओं ह्रीं क्लीं चामुण्डायै विच्चे स्वर्गकपालाय सर्वाधाराय सर्वोद्भवाय सर्वशुद्धिमयाय सर्वासुर-रुधिरारुणाय शुभ्राय सुधाभाजनाय देवीकपालाय नमः' इति पुष्पाक्षतैः सम्पूज्य शंखे सुधाबुद्धया मूलमन्त्रेण जलं निधाय तत्र अंकुशमुद्रया सूर्यमण्डलात् तीर्थमावाहयेत्। तद्यथा—ओं गङ्गे च यमुने

चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥ ओं ब्रह्माण्डादरतीर्थानि करैः स्पृष्टानि ते रवे। तेन सत्येन मे देव तीर्थन्देहि दिवाकर॥ ओं गङ्गाद्याः सरितः सर्वाः सरांसि जलदा नदाः। ह्रदाः प्रस्रवणाः पुण्याः स्वर्गपातालभूगताः। सर्वतीर्थानि पुण्यानि पात्रे कुर्वन्तु सन्निधिम्॥ इति तीर्थान्यावाह्य—ओं ऐं ह्रीं श्रीं ह्रों श्रों ह्रीं लीं इँ फट् ह सौं हूँ' इति जलमभिमन्त्र्य शंखधेनुयोनिमुद्राः दर्शयित्वा मत्स्यमुद्रया आच्छाद्य मूलमन्त्रं दशधा जपित्वा जपा-करवीर-द्रोण-कमलाद्रिपुष्पाणि, अक्षतम्, दूर्वा, दधि, तिलं यवं, सर्वौषधि, बिल्वपत्रम्, कुश-मूलानि च दत्त्वा त्रिखण्डां मुद्रां प्रदर्श्य गन्धपुष्पाक्षतैः—ओं गङ्गादिसकलतीर्थेभ्यो नमः। ओं हृदादिषडङ्गदेवताभ्यो नमः। ओं साङ्गसायुधसवाहनसपरिवारायै स्वेष्टदेवतायै दुर्गायै नमः। इति सम्पूज्य—ओं सूर्यकोटिप्रतीकाशं चन्द्र-कोटिसुशीतलम्। अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम्॥ अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम्। वृषारूढं नीलकण्ठं सर्वाभरणभूषितम्॥ कपालखट्वाङ्गधरं घण्टाडमरुवादिनम्। पाशाङ्कुशधरं देवं गदामुशलधारिणम्॥ खड्गखेटकपट्टीशमुद्गरोच्छूलकुन्तिनम्। विचित्रखेटकं मुण्डं वरदाभयमालिनम्। लोहितं देवदेवेशं भावयेत्साधकोत्तमः। भावयेच्च सुधां देवीं चन्द्रकोट्ययुतप्रभाम्॥ हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम्। अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम्॥ प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखीम्॥ इति ध्यात्वा सामान्यार्घ्योदकेन—ओं आनन्द-भैरवीं तर्पयामि। ओं स्वेष्टदेवतां तर्पयामि। इति सन्तर्प्य तज्जलेनात्मानं पूजोपकरणानि चाभिषिच्य पूजामारभेत।

## अथ कलशस्थापनम्

चतुरस्रवेदिकान्विते (१) कलशस्थापनप्रदेशे पञ्चवर्णरजोभिः पद्माकारमण्डलमालिख्य कुशत्रयतिलजलान्या-

(१) रुद्रयामले—शुद्धाभिमृत्तिकाभिश्च कृत्वा तु वेदिकाम्। दद्यान् वै दीपदेहत्र गोधूरश्चापि संयुताम्॥ तत्र संस्थापयेत् कुम्भं विधिना मन्त्रपूर्वकम्। सौवर्णं राजतं वाऽपि ताम्रं मृन्मयमेव वा॥



दाय(१)–अद्यामद्याश्विने मासि शुक्ले पक्षे प्रतिपत्तिथौ अमुकगोत्रस्यामुकशर्मणो मम सपरिवारस्य सदारापत्यमित्रस्य सकलवाहनस्य चोपस्थितशरीराविरोधेन नवग्रहोपग्रहजनितसकलारिष्टझटिति-प्रशमनपूर्वकदीर्घायुष्ट्वबलपुष्टिनै-रुज्यप्राप्तिसर्वपापप्रशमनाऽखिलापच्छान्तिपूर्वक- धनधान्याकण्टकराज्यभोग्यसन्ततिसुखान्वितनिखिल - मनोऽभिलषित-फलप्राप्तिपूर्वक-साङ्गसायुधसवाहनसपरिवारश्रीदुर्गाप्रीतिकामो वार्षिकशरत्कालीनश्रीदुर्गापूजाङ्गभूतकलशस्थापनमहं करिष्ये। इति संकल्प्य स्ववामभागे देवतायाः दक्षिणभागे सम्मुखे वा पञ्चगव्य-गङ्गाजलाद्यभिषिक्तां सुपरिष्कृतां नदीनदसमुद्भवबालुकानिर्मितां द्विहस्तां (२) सार्धहस्तां हस्तमात्रपरिमितां वा सबिन्दुषट्कोणाष्टदलयन्त्रगर्भां सर्व-तोभद्रमण्डलगर्भां वा चतुरस्रां वेदीं निर्माय सामान्यार्घोदकेन तामभ्युक्ष्य—ओं कलशाधारशक्ते इहागच्छ इह तिष्ठेत्यावाह्य ओं कलशाधारशक्तये नमः। इति पञ्चोपचारैः सम्पूज्य मध्यमानामिकाभ्यां वेदिभूमिं स्पृष्ट्वा पठेत्—ओं भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री, पृथिवीं यच्छ पृथिवीं दृ ँ ह पृथिवीं माहि ँ सीः। इति मन्त्रेण भूमिपरिग्रहणं कृत्वा—ओं मानस्तोके तनये मान आयुषि मानो गोषु मानो ऽश्वेषु रीरिषः। मनो वीरान् रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हमामहे। इति गोमयोदकेन उपलिप्य—ओं वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना॥ इति गंगाजलेन शुद्धिं कृत्वा यवान् दद्यादनेन—

कलशाधिष्ठितदेवताः—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः॥

(१) सामाजिकसम्मिलितपूजापक्षे—ॐ अद्याश्विने मासि शुक्ले पक्षे एतद्ग्रामवासिनां नानानां गोत्राणां सकल-जनानामेतत्पूजोपकारकाणामन्यग्रामवासिनां चोपस्थितशरीराविरोधेन नवग्रहेत्यादि।

(२) मात्स्ये—द्विहस्ता चोत्तमा वेदी मध्यमा सार्धहस्तका। अधमा हस्तमात्रा च न्यूनाधिक्यं न कारयेत्॥

ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानायत्वा व्यानायत्वा दीर्घामनुप्रसितिमायुषेधां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोसि ॥ ओं यव त्वं यवरूपोऽसि यज्ञार्थे निर्मितो विधेः। देवानां तृप्तिकृद्यस्मात् तस्मात्त्वं वरदो भव ॥ ओं जयन्ती मंगला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते ॥ ओं दुर्गे दुर्गे रक्षिणि स्वाहा ॥ ततस्तत्र दृढमव्रणमश्यामं माल्यालंकृतं कलशं स्थापयेदनेन—ओं आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्ज्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः। ततः कलशं (१) दध्यक्षतैर्भूषयेदनेन—ओं दधिक्राव्णो ऽअकारिषं जिष्णोरस्वस्य व्वाजिनः। सुरभि नो मुखाकरत् प्रण ऽआयूंषि तारिषत्। ततः कलशे वरुणं (जलं) न्यसेदनेन—ओं व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनीस्थो व्वरुणस्य ऽऋतसदन्यसि व्वरुणस्य ऽऋतसदनमसि व्वरुणस्य ऽऋतसदनमासीद। ततः कलशे गंगाजलं क्षिपेत्—ओं गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च। सर्वे समुद्राः सरितः तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ततः पञ्चरत्नं (२) दद्यादनेन—ओं हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ततः (३) पञ्चपल्लवं

(१) विहितकलशं मेरुतन्त्रे—सौवर्णं भोगदं प्रोक्तं राजतं मोक्षदायकम्। ताम्रं प्रीतिकरं ज्ञेयं कांस्यजं पुष्टिवर्धनम्।
काचं वश्यकरं प्रोक्तं पाषाणं शुभकर्मणि। मृन्मयं सर्वकार्येषु सुदृश्यं सुपरिष्कृतम् ॥

(२) हेमाद्रिः—कनकं हीरकं नीलं पद्मरागं च मौक्तिकम्। पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्वदर्शिभिः ॥
तदभावे विशेषः—रत्नानां चाप्यभावे तु स्वर्णं कर्षार्धमेव च। सुवर्णस्याप्यभावे तु आज्यं देयं विचक्षणैः ॥

(३) पञ्चपल्लवं यथा वैदिककर्मणि—'आम्राऽश्वत्थ-वट-पर्कटी-यज्ञोदुम्बराणि'।
तान्त्रिककर्मणि तु—पनसाम्रं तथाऽश्वत्थं वटं बकुलमेव च। पंचपल्लवमुक्तं च मुनिभिस्तन्त्रवेदिभिः ॥ इति।



दद्यादनेन—ओं अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज ऽइत्किलासाथ यत्सनवथ पूरुषम्। ओं ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषांᳫ सहस्रयोजनेव धन्वानि तन्मसि। ओं अम्बे ऽअम्बिके ऽअम्बालिके नमानयति कश्चन ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्। ततः सप्तमृत्तिकां (१) दद्यानेन—ओं स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छानः शर्म सप्रथाः। ततः सर्वौषधीः (२) दद्यात्—ओं या ऽओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः। तासामसित्वमुत्तमारं कामायशᳫ हृदे। ततो नारिकेलं दद्यादनेन—ओं या फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वᳫ हंसः। ततो वस्त्रं दद्यात्—ओं युवासुवासाः परिवीत आगात् स उश्रेयान् भवति जायमानः। तन्धीरासः कवयः उन्नयन्ति स्वाध्यो मनसा देवयन्तः। ततः कलशे हस्तं दत्वा स्थिरीकुर्यादनेन—ओं स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुखदस्त्वमग्ने पुरीषवाहणः ॥ ततः पुष्पं दद्यादनेन—ओं श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणमुम्म इषाण सर्वलोकम्म इषाण ओं यँ ॥ ततश्चन्दनं दद्यादनेन—ओं गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम् ॥ ततो दूर्वाक्षतं दद्यादनेन—ओं काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च। ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे। ततो व्रीहिवपनम्—ओं व्रीहयश्च मे यवाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मे प्रणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम्। ततः अलक्तकं दद्यात्—ओं आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना—देवो याति भुवनानि पश्यन् ॥ ततः सिन्दूरं दद्यात्—ओं सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः।

(१) सप्तमृत्तिकाः—अश्वस्थानाद् गजस्थानात् वल्मीकात् सङ्गमाद्ध्रदात्। गोकुलादथ रथ्यादाहृताः सप्तमृत्तिकाः ॥
(२) सर्वौषधिः—कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः। मुराचन्दनकर्पूरमुस्तैः सर्वौषधिः स्मृतः ॥

घृतस्य धारा अरुषोन वाजीकाष्ठा भिन्दन्नूर्मिभिः पिन्वमानः। इति प्रधानकलशस्थापनं विधाय वेदीकोणेषु दध्यक्षतमाल्यवस्त्रालंकृतान् जलपूर्णान् शरावयवमुखान् यवोपरि चतुरः कलशान्निवेशयेत्। ततः कलशे पूजामारभेत्। पुष्पाक्षतमादाय—ओं मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳪसमिमन्दधातु विश्वेदेवास इह मादयन्यामों प्रतिष्ठ। ओं विनायकादि-पञ्चदेवता-नवदुर्गा-नवचण्डिका-नवग्रहादि-दिक्पाल-वाहनास्त्रादिदेवतासहित-सांगसायुधसवाहनसपरिवार ओं भूर्भुवःस्वर्भगवति श्रीदुर्गे इहागच्छ इह तिष्ठ तिष्ठ, इह सन्निधेहि सन्निधेहि, अत्राधिष्ठानं कुरु कुरु, मम सर्वोपचारसहितां पूजां गृहाण गृहाण स्वाहा। इति प्रतिष्ठाप्य—ओं शान्तिकलश इहागच्छ इह तिष्ठेत्यावाह्य ओं शान्तिकलशाय नमः। इति पञ्चोपचारैः पूजयेत्॥ ततः पुष्पाञ्जलिः—ओं शान्तिकुम्भ महाभाग सर्वकामफलप्रद। पुष्पं गृहाण शुभं यच्छ देवाधार नमोऽस्तु ते॥ ततः कलशे गणपतिमावाह्य पूजयेत्। तद्यथा— ओं गणानान्त्वा गणपतिᳪ हवामहे प्रियाणान्त्वा प्रियपतिᳪ हवामहे निधीनान्त्वा निधिपतिᳪ हवामहे व्वसो मम ऽआहम जानि गभधमात्वमजासि गर्भधम्। इति पठित्वा ओं कलशाधिष्ठित-गणेश इहागच्छ इह तिष्ठेत्यावाह्य पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिं दद्यात्—ओं एकदन्तं महाकायं लम्बोदर-गजाननम्। विघ्नविनाशकरं देवं हेरम्बं प्रणमाम्यहम्॥ ततः ओं वरुण इहागच्छ इह तिष्ठेत्यावाह्य पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिं दद्यात्—ओं वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनीस्थो व्वरुणस्य ऋतसदन्यसि व्वरुणस्य ऋतसदनमसि व्वरुणस्य ऋतसदनमासीद॥ ततो ब्रह्मपूजा—पुष्पाक्षतमादाय—ओं आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो धायताम्। दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुनन्ध्रिर्योषा जिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम्। योगक्षेमो नः कल्पताम्॥ ओं भूर्भुवः स्वर्ब्रह्मन् इहागच्छ इह तिष्ठेत्यावाह्य पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिमादाय—



ओं पद्मयोनिश्चतुर्मूर्तिर्वेदवासाः पितामहः। यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः॥ एष पुष्पाञ्जलिः ओं ब्रह्मणे नमः। ततो दुर्गां पूजयेत्—ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते। ओं भूर्भुवः स्वर्भगवति दुर्गे इहागच्छ इह तिष्ठेत्यावाह्य पञ्चोपचारैः पूजयेत्।

## अथ प्रतिपदि कलशे प्रधानदुर्गापूजा

ततः कलशस्थापनानन्तरं कलशे (१) देव्याः प्रधानपूजामारभेत्। तत्र सङ्कल्प—कुशत्रयतिलजलान्यादाय—ओं अद्याश्विने मासि शुक्ले पक्षे प्रतिपत्तिथौ अमुकगोत्रस्यामुकशर्मणो मम (२) सपरिवारस्योपस्थितशरीराविरोधेन राज्यायुःसुतसौख्यसैश्वैश्वरकर्तृकसम्मानसदायुद्धविजयसर्वविधसौमनस्य—नैरुज्य–दीर्घायुष्ट्वसार्वदिक्—श्रीदुर्गाप्रीतिकाम कलशे श्रीदुर्गादेव्याः पूजनमहं करिष्ये। इति संकल्प्य पुष्पाक्षतमादाय—ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते॥ ओं भूर्भुवः स्वर्भगवति श्री दुर्गे इहागच्छ इह तिष्ठेत्यावाह्य पुष्पमेकं गृहीत्वा—ओ आगच्छ चण्डिके देवि अष्टाभिः शक्तिभिः सह। पूजाभागं गृहाणेमं सान्निध्यमिह कल्पय॥ ओ आगच्छ त्वं महाभागे सर्वकल्याणहेतवे। मम शत्रुविनाशाय शङ्करप्राणदायिनि॥ इदमावाहनपुष्पं साङ्गसायुधसवाहनसपरिवारायै दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै भद्रकाल्यै सर्वशक्तिस्वरूपिण्यै ओं ह्रीं भगवत्यै श्रीदुर्गायै नमः। पुनः पुष्पं गृहीत्वा—ओं दुर्गे सर्वजगन्नाथे यावत् पूजावसानकम्। तावत्त्वं प्रीतिभावेन घटेऽस्मिन् सन्निधा भव॥ इति सम्मुखीकृत्य—ओं क्षमापः पृथिवी चैव ज्योतिषं वायुरेव च। लोकसंस्मृ-

(१) मात्स्ये—चित्रे च प्रतिमायां च मृन्मय्यां श्रीफलेऽपि च। महायोनौ चन्द्रबिम्बे शिलायां कलशे तथा॥
चक्रे पादुके खड्गे महानिम्बे तथैव च। पुण्यक्षेत्रे च गङ्गायां देवीमावाह्य पूजयेत्॥ इति।

(२) ग्रामपूजायां तु—ओमद्येत्यादि एतद्ग्रामवासिनां नानानां गोत्राणां सकलजनानामेतत्पूजोपकारकाणामन्यग्रामवासिनां चोपस्थितशरीराविरोधेन राज्यायुरित्यादि।

तिमात्रेण वारिणा स्नापयाम्यहम् ॥ इदं स्नानीयं भगवत्यै श्रीदुर्गादेव्यै नमः। चन्दनमादाय—ओं मलयाजलसम्भूतं नानागन्धसमन्वितम्। शीतलं बहुलामोदं चन्दनं गृह्यतामिदम् ॥ इदं श्रीखण्डचन्दनम्०। ततः रक्तचन्दनम्। ततः सिन्दूरमादाय—ओं सिन्दूरं सर्वसाध्वीनां भूषणाय विनिर्मितम्। गृहाण वरदे देवि भूषणानि प्रयच्छ मे ॥ इदं सिन्दूराभरणम्०। ततोऽक्षतमादाय—ओमक्षतं धान्यजं देवि ब्रह्मणा निर्मितं पुरा। प्राणदं सर्वभूतानां गृहाण वरदे शुभे ॥ इदमक्षतम्०। ततः पुष्पाण्यादाय—ओं चलत्परिमलामोदमत्तालिगणसङ्कुलम्। आनन्दनन्दनोद्भूतं दुर्गायै कुसुमं नमः ॥ एतानि पुष्पाणि०। ततो बिल्वपत्रमादाय—ओं अमृतोद्भवश्रीवृक्षं शङ्करस्य सदा प्रियम्। पवित्रं ते प्रयच्छामि बिल्वपत्रं सुरेश्वरि ॥ इदं बिल्वपत्रम्०। ततो द्रोणपुष्पमादाय—ओं ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम्। तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये ॥ इदं द्रोणपुष्पम्०। ततो वस्त्र-धूप-दीप-नानाविधनैवेद्यैः ताम्बूलैः सम्पूज्य पुष्पाञ्जलिं दद्यात्—ओं दुर्गे दुर्गे महामाये सर्वशक्तिस्वरूपिणि। त्वं काली कमला ब्राह्मी त्वं जया विजया शिवा ॥ त्वं लक्ष्मीर्विष्णुलोकेषु कैलासे पार्वती तथा। सरस्वती ब्रह्मलोके चेन्द्राणी शक्रपूजिता ॥ वाराही नारसिंही च कौमारी वैष्णवी तथा। त्वमापः सर्वलोकेषु ज्योतिस्त्वं ज्योतिरूपिणी ॥ योगमाया त्वमेवासि वायुरूपा नभःस्थिता। सर्वगन्धवहा पृथ्वी नानारूपा सनातनी ॥ विश्वरूपे विश्वेशे विश्वशक्तिसमन्विते। प्रसीद परमानन्दे दुर्गे देवि नमोस्तु ते। नानापुष्पसमाकीर्णं नानासौरभसंयुतम्। पुष्पाञ्जलिञ्च विश्वेशि गृहाण भक्तवत्सले ॥ एष पुष्पाञ्जलिः०। ततः नीराजनं—ओं कर्पूरवर्तिसंयुक्तं वह्निना दीपितञ्च यत्। नीराजनं च देवेशि गृह्यतां जगदम्बिके ॥ इदं नीराजनम्०। ततः क्षमापनम्—ओं प्रार्थयामि महामाये यत्किञ्चित् स्खलितं मम। क्षम्यतां तज्जगन्मातः दुर्गे देवि नमोस्तु ते ॥ ततः ओं महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यमैश्वर्यं देहि देवि नमः सदा ॥ ओं सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते। भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ इत्यादिना प्रणमेत् ॥



[एवं च षष्ठीपर्यन्तं प्रत्यहं पूजयेत्। तत्र पूजां कृत्वा द्वितीयायां देव्यै केशसंयमनार्थं पट्टडोरकं, तृतीयायां चरणरागार्थमलक्तकं, शिरसि धारणार्थं सिन्दूरं, मुखविलोकनार्थं दर्पणम्, चतुर्थ्यां मधुपर्कम्, रौप्यतिलकं (टिकुली), नेत्रार्थं कज्जलम्, पञ्चम्यां चतुःसमालेपनं यथाशक्त्यलङ्करणं च समर्पयेदिति विशेषः। पूजितदेवताभ्यः सायं प्रातः पुष्पाञ्जलिं च प्रत्यहं दद्याद्। शङ्कल्पवाक्येषु प्रत्यहं तत्तत्तिथ्युल्लेखः कर्तव्यः।]

## अथ दशदिक्पालपूजनम्

ततः यजमानः इन्द्रादिदशदिक्पालान् (१) पूजयेत्तद्यथा—अक्षतादिकमादाय—ॐ शतयज्ञ सुरारिघ्न सहस्राक्ष पुरन्दर। पूजां गृहाण देवेश सन्निधेहि नमोस्तु ते ॥ ॐ इन्द्र इहागच्छ इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि एषोऽर्घः ॐ इन्द्राय नमः। इति पञ्चोपचारैः पूजयेत्। ततः पुष्पाञ्जलिः—ॐ इन्द्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः। शतयज्ञाधिपो देवस्तस्मै नित्यं नमो नमः ॥ इति त्रिः। तत आग्नेयदले—ओं स्वाहाप्रिय महाज्वाल हुताशन सुरानन। सर्वयज्ञभुजां श्रेष्ठ सन्निधेहि नमोस्तु ते ॥ ओं अग्ने इहागच्छ इह तिष्ठेत्वाह्य, एतानि पाद्यादीनि एषोऽर्घः ओं अग्नये नमः। इत्यनेन यथोपचारैः सम्पूज्य पुष्पाञ्जलिमादाय—ओं अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे देवाँ२ आसादयादिह ॥ इति त्रिः पुष्पाञ्जलिं दद्यात्। ततो दक्षिणदले—ओं धर्मराज महाबाहो महामहिषवाहन। हिताय यमलोकेश सन्निधेहि नमोस्तु ते ॥ ओं यम इहागच्छ इह तिष्ठेत्यावाह्य एतानि पद्यादीनि एषोऽर्घः ओं यमाय नमः। इत्यनेन यथोपचारैः पूजयेत्। ततः पुष्पाञ्जलिमादाय—ओं असि यमो ऽअस्यादित्यो ऽअर्वन्नसित्रितो गुह्येन व्रतेन ऽअसि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ इति त्रिः पुष्पा-

१. इन्द्रादिदशदिक्पालाश्च—१. इन्द्रः, २. अग्निः, ३. यमः, ४. निर्ऋतिः, ५. वरुणः, ६. वायुः, ७. सोमः, ८. ईशानः, ९. अनन्तः, १०. ब्रह्मा च।

ञ्जलि दद्यात् । ततो नैर्ऋत्यदले—ओं रक्षोधिप महासत्त्व बहुहस्त महाबल । निर्ऋते मम रक्षार्थं सन्निधेहि नमोऽस्तु ते ॥ ओं निर्ऋते इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि एषोऽर्घः ओं निर्ऋतये नमः । इत्यनेन यथोपचारैः पूजयेत् । ततः पुष्पाञ्जलिमादाय—ओं एष ते निर्ऋते भागस्तं जुषस्व स्वाहा ॥ इति त्रिः पुष्पाञ्जलिं दद्यात् । ततः पश्चिमदले—ओं यादःपते पाशधर पश्चिमाशाप्रसाधक । परिवारैः सह विभो सन्निधेहि नमोऽस्तु ते ॥ ओं वरुण इहागच्छ इह तिष्ठेत्यावाह्य, ओं वरुणाय नमः इति यथोपचारैः पूजयेत् । ततः पुष्पाञ्जलिमादाय—ओं वरुणः सबलो जिष्णुः पुरुषो निम्नगाधिपः । पासहस्तो महाबाहुस्तस्मै नित्यं नमो नमः ॥ इनि त्रिः पुष्पाञ्जलिं दद्यात् । ततो वायव्यदले—ओं जगत्प्राण जगद्देव जगदाद्य जगद्गुरो । गणैः सह महानाथ सन्निधेहि नमोऽस्तु ते ॥ ओं वायो इहागच्छ इह तिष्ठेत्यावाह्य, ओं वायवे नमः इति यथोपचारैः पूजयेत् । ततः पुष्पाञ्जलिमादाय—ओं सर्वप्राणाधिपो नित्यं सर्वजन्तुष्ववस्थितः । ध्वजहस्तो मेघवर्णस्तस्मै वातात्मने नमः ॥ इति त्रिः पुष्पाञ्जलिं दद्यात् । तत उत्तरदले—ओं सर्वनक्षत्रमध्ये यः सोमो राजा व्यवस्थितः । शुक्लवर्णो गदाहस्तस्तस्मै सोमात्मने नमः ॥ ओं सोम इहागच्छ इह तिष्ठेत्यावाह्य, ओं सोमाय नमः, इति यथोपचारैः पूजयेत् । ततः पुष्पाञ्जलिमादाय—ओं गौरेयस्तु पुमान् सौम्यः सर्वौषधिसमन्वितः । नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः ॥ इति त्रिः पुष्पाञ्जलिं दद्यात् । तत ईशानदले—ओं एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वाङ्गधारेण सार्धम् । लोकेश यज्ञेश्वर सिद्धसंघैर्गृहाण पूजां भगवन्नमस्ते ॥ ओं ईशान इहागच्छ इह तिष्ठेत्यावाह्य ओं ईशानाय नमः, इति यथोपचारैः पूजयेत् । ततः पुष्पाञ्जलिमादाय—ओं सर्वदेवाधिपो देव ईशानः शुक्लविग्रहः । शूलपाणिर्वृषारूढो रुद्राधिपतये नमः ॥ इति त्रिः पुष्पाञ्जलिं दद्यात् । ततो निर्ऋतिवरुणयोर्मध्ये—ओं पन्नगाधिपतिर्देवो योऽनन्तो नीलविग्रहः । पातालवसतिर्नित्यमनन्ताय नमो नमः ॥ ओमनन्त इहागच्छ इह तिष्ठेत्यावाह्य यथोपचारैः पूजयेत् । ततः पुष्पाञ्जलिः—



ओं योऽसावनन्तरूपेण ब्रह्माण्डसचराचरम् । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥ इति त्रिः पुष्पाञ्जलिं दद्यात् । ततः ईशानेन्द्रयोर्मध्ये—ओं पलाशकुसुमाकारो ब्रह्मा चैवाक्षसूत्रधृक् । सर्वयज्ञपतिर्देवस्तस्मै नित्यं नमो नमः ॥ ओं ब्रह्मन्निहागच्छ इह तिष्ठेत्यावाह्य पाद्यादिभिः पूजयेत् । ततः पुष्पाञ्जलिः—ओं ब्रह्मयोनिश्चतुर्मूर्तिर्वेदवासाः पितामहः । यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥ इति त्रिः पुष्पाञ्जलिं दद्यात् ।

## अथ नवग्रहपूजनम्

अथ यजमानो लिखिताष्टदलमध्ये सूर्यादिनवग्रहानावाह्य(१) पूजयेत् । तत्र क्रमः—रक्ताक्षतादिकमादाय पूर्वदले—ओं सूर्य इहागच्छ इह तिष्ठेत्यावाह्य, ओं आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ एतानि पाद्यादीनि एषोऽर्घः ओं सूर्याय नमः । इदं रक्तानुलेपनम्० इदं रक्ताक्षतम्० एतानि रक्तपुष्पाणि इत्यनेन यथोपचारैः पूजयेत् । ततः उत्तरदले ओं—सोम इहागच्छ इह तिष्ठेत्यावाह्य, ओं इमन्देवा असपत्न ँ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणा ँ राजा ॥ एतानि पाद्यादीनि एषोऽर्घः ओं सोमाय नमः । एवं श्वेतपुष्पादिना यथोपचारैः पूजयेत् । ततः ओं कुज इहागच्छ इह तिष्ठेत्यावाह्य, ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपा ँ रेता ँ सिजिन्वति ॥ एतानि पाद्यादीनि एषोऽर्घः ओं कुजाय नमः । एवं लोहितपुष्पादिना पूजयेत् । तत ऐशान्याम्—ओं बुध इहागच्छ इह तिष्ठेत्यावाह्य, ओं उद्बुध्यस्वाग्ने

(१) नवग्रहाणां समिधः—अर्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः । औदुम्बरः शमी दूर्वाः कुशाश्च समिधः क्रमात् ॥ समिदर्कमयी भानोः पलाशी शशिनस्तथा । खादिरी भूमिपुत्रस्य त्वपामार्गी बुधस्य च । गुरोरश्वत्थजा प्रोक्ता शुक्रस्यौदुम्बरी मता । शमीनां तु शनेः प्रोक्ता राहोर्दूर्वामयी तथा । केतोर्दर्भमयी प्रोक्ताऽन्येषां पालाशवृक्षजाः ॥ इति । सति हवने इदं ज्ञेयम् ।

प्रतिजागृहि त्वमिष्टापूर्ते स ँ सृजेथामयञ्च । अस्मिन्त्सधस्थे अद्ध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ॥ एतानि पाद्यादीनि एषोऽर्घः ओं बुधाय नमः । इति पीतपुष्पादिना पूजयेत् । तत उत्तरस्याम्—ओं बृहस्पते इहागच्छ इह तिष्ठेत्यावाह्य, ओं बृहस्पते अतियदर्य्यो ऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवास ऋतप्रजाततदस्मासु द्रविणन्धेहि चित्रम् ॥ एतानि पाद्यादीनि एषोऽर्घः ओं बृहस्पतये नमः । इति पीतपुष्पादिना पूजयेत् । ततः प्राच्याम्—ओं शुक्र इहागच्छ इह तिष्ठेत्यावाह्य, ओं अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोमृतं मधु । एतानि पाद्यादीनि एषोऽर्घः ओं शुक्राय नमः । इति श्वेतपुष्पादिना पूजयेत् । ततः पश्चिमायाम्—ओं शनैश्चर इहागच्छ इह तिष्ठेत्यावाह्य, ओं शन्नोदेवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥ एतानि पाद्यादीनि एषोऽर्घः ओं शनैश्चराय नमः । इति कृष्णपुष्पादिना पूजयेत् । ततो नैर्ऋत्याम्—ओं राहो इहागच्छ इह तिष्ठेत्यावाह्य, ओं कयानश्चित्र आभुवदूती सदा वृधः सखा । कयाशचिष्ठयावृता । एतानि पाद्यादीनि ऐषोऽर्घः ओं राहवे नमः । एवं कृष्णपुष्पादिना पूजयेत् । ततो वायव्याम्—ओं केतव इहागच्छत इह तिष्ठतेत्यावाह्य, ओं केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः । एतानि पाद्यादीनि एषोऽर्घः ओं केतुभ्यो नमः । इति धूम्रपुष्पादिना पूजयेत् । ततो देव्याः दक्षिणे नवाऽहोरात्रस्थायिनं दीपमुत्सृज्येत् । तद्यथा—कुशत्रयादिकमादाय—ओमद्येत्यादि वाजपेययज्ञजन्यफलसमफलप्राप्तिकामो नवाहोरात्रस्थायिदीपमिदं विष्णुदैवतं श्रीदुर्गादेव्यै अहं ददे ।

अथाचाराद् देवीमुद्दिश्य नानाविधानि फलानि नानापक्वान्नानि पायसं च दद्यात् । यथाशक्ति चण्डीपाठं, सति संभवे वक्ष्यमाणविधिना स्वस्त्ययनं हवनं, छागादिबलिदानं(१), कुमारीपूजनं, कुमारीभोजनं सुवासिनीभोजनं,

(१) षष्ठीपर्यन्तं छागादिबलिदानन्तु क्वचिदेव भवति । तद्विधिस्तु महासप्तमीपूजान्ते द्रष्टव्यः ।



ब्राह्मणभोजनञ्च कारयेत् । देवीगृहे नृत्यगीतवाद्यादिभिरुत्सवं च कारयेत् । सायङ्काले कुंकुमगन्धामलकीकंकतिका(१) प्रभृतिकेशसंस्कारकवस्तूनि देव्यै समर्प्य आरार्तिकं पुष्पाञ्जलिं च स्तोत्रपाठादिना दद्यात् ।

## अथ द्वितीयायां रेमन्तपूजाविधिः

कुशत्रयतिलजलान्यादाय—ओमद्याश्विने मासि शुक्ले पक्षे द्वितीयायां तिथौ(२) 'अमुकगोत्रस्यास्य अमुकशर्मणः उपस्थितशरीराविरोधेन सपरिवारस्य सकलपीडाप्रशमनपूर्वकदीर्घायुष्ट्वबलपुष्टिनैरुज्याद्यखिलकल्याणोत्पत्तिकामो रेमन्तमुच्चैःश्रवसं तुरङ्गश्चाऽहं पूजयिष्ये । इति संकल्प्य(३) पुष्पाक्षतमादाय—ॐ साश्वरेमन्त इहागच्छ इह तिष्ठेत्यावाह्य—ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनो त्वरिष्टं यज्ञँ समिमन्दधातु विश्वेदेवास इह मादयन्तामोमम्प्रतिष्ठ । इत्यनेन प्राणप्रतिष्ठां विधाय एतानि पाद्यादीनि एषोऽर्घः ॐ साश्वरेमन्ताय नमः । इति पंचोपचारैः पूजयेत् । ततः पुष्पाञ्जलिमादाय—ॐ नमो देवाधिदेवाय तुरङ्गबलचारिणे । सूर्यपुत्राय देवाय तुरङ्गाणां हिताय च । तुरङ्गोपरि संयम्य मृगयां परिधावति । साश्वमश्वाधिपं रक्ष शरणं त्वां व्रजाम्यहम् ॥ ओमश्वरूपोऽसि

(१) भविष्यपुराणे—केशसंस्कारद्रव्याणि प्रदद्यात् प्रतिपद्दिने । पट्टडोरं द्वितीयायां केशसंयमहेतवे ॥ दर्पणञ्च तृतीयायां सिन्दूरालक्तकन्तया । मधुपर्कं चतुर्थ्यां तु तिलकं नेत्रमण्डलम् ॥ पञ्चम्यामङ्गरागञ्च शक्त्यालङ्करणानि च ॥ इति ।

(२) ग्रामपूजायान्तु—ओमद्येत्यादि 'एतद्ग्रामवासिनां नानानां गोत्राणां सकलजनानामेतत्पूजोपकारकाणामन्यग्रामवासिनां च उपस्थितशरीराविरोधेन' सपरिवारस्येत्यादि योज्यम् ।

(३) राजा चेद्यजमानस्तदा अश्वशालायां सर्वतः परिवृतामनुलिप्तां नानावर्णपुष्पालंकृतां सुधूपितां कृत्वा अश्वशालायाः पश्चिमदिशि वप्रत्रयावृततण्डुलचूर्णस्थण्डिलं निर्माय तदुपरि चन्दनादिना मण्डलं प्रकल्प्य तत्र मूर्तौ वा रेमन्तमुच्चैःश्रवसं च पूजयेत् । रेमन्तपूजा नृपैरेव कर्तव्या न तु गृहस्थैः, अनावश्यकत्वादिति केचित् । अत्र यथाचार एव प्रमाणम् ।

तेजस्वी खड्गपाणिर्भयानकः सवर्णसम्भवः सौरी रेमन्तस्त्वं प्रसीद मे ॥ एष ध्यानपुष्पाञ्जलिः ॐ साश्वरेमन्ताय नमः। ततोऽञ्जलिं बध्वा—ॐ सूर्यपुत्र महाबाहो छायाहृदयनन्दन। शान्तिं कुरु तुरङ्गाणां रेमन्ताय नमोऽस्तु ते ॥ इति प्रणमेत्। ततः पुष्पाक्षतमादाय—ॐ उच्चैःश्रव इहागच्छ इह तिष्ठेत्यावाह्य, ॐ उच्चैःश्रवसे नमः, इति पञ्चोपचारैः पूजयेत्। ततोऽश्वकर्णे जपेत्—ॐ उच्चैःश्रवो नमस्तुभ्यं नमः क्षीराब्धिनन्दन। वाहान् वर्धय वाहेन्द्र सर्वोत्पातं विनाशय ॥ येन सत्येन रेमन्त येन सत्येन भास्करम्। वहसे तेन सत्येन विजयस्व वहस्व माम् ॥ एवं महानवमीपर्यन्तं प्रत्यहं पूजयेत्। ततो धान्य-भल्लातक-वचा-कुष्ठ-सर्षप-लोह-निम्बपत्र-गुग्गुलु-घृत-हिङ्गुभिः पञ्चरङ्गसूत्रेण पीतवस्त्रैश्च पोटलिकां कृत्वा अश्वकण्ठे बध्नीयात् (१)।

## अथ षष्ठ्यां गजपूजा

शालायाः (२) प्रागुदग्भागे स्थण्डिलं कल्पयेत् बुधः। चतुर्द्वारं चतुर्हस्तं मण्डपं तु सुशोभनम् ॥ तत्राङ्गं षोडशदलं निर्मातव्यं सकर्णिकम्। सिततण्डुलचूर्णेन प्रयत्नेन मनीषिणा ॥ विदिक्षु पूर्णकलशान् पूर्णपात्रयुतान् न्यसेत्। सप्तहस्तेषु दण्डेषु पताकांश्च तथा न्यसेत् ॥ दिग्गजानान्तु विन्यासमौषधीभिः प्रकल्पयेत् ॥ ततः कुशादिकमादाय—ओमद्याश्विने मासि शुक्ले पक्षे षष्ठ्यां तिथौ अमुकगोत्रः श्री अमुकशर्माऽहं गजसमृद्धिकामः कुमुदैरावतादीन्

(१) यजमानो राजा चेत्—अश्वशालायां निम्बाज्यसर्षपांश्च दद्यात्। छागबलिदानं च कारयेत्। तत्र सङ्कल्पः—ओमद्येत्यादि अश्वानामुत्पातपीडाप्रशमनपूर्वकदीर्घायुष्ट्वसमृद्धिकामोऽमुं छागं वह्निदैवतं रेमन्तायाऽहं घातयिष्ये। इति बलिं दत्त्वा गीतवाद्यादिकं कारयेत्। ताडनवाहनादि वर्जयेत्।

(२) ततः षष्ठ्यां गजपूजा कार्या—ज्येष्ठायोगे पुरा तत्र…… नवम्यन्तञ्च पूजयेत् ॥ इति ब्रह्मपुराणवचनात् महानवमीपर्यन्तं प्रत्यहं पूजयेत्। इयं गजपूजा नृपैरेव कार्या न तु गृहस्थैरनावश्यकत्वादिति सर्वनिबन्धसारः।





दिग्गजान् पूजयिष्ये ॥ इति सङ्कल्प्य, इन्द्रादीनां प्रत्येकं सम्बोधनान्तपदेनावाह्य चतुर्थ्यन्तपदेन पञ्चोपचारैः पूजयेत्। तद्यथा—पूर्वदले—इन्द्राय नमः, ऐरावताय नमः, अभ्रमवे नमः, अग्नये नमः, पद्माय नमः, कपिलायै नमः। ततो दक्षिणदले—यमाय नमः, पुष्पदन्ताय नमः, पिङ्गलायै नमः। ततो नैर्ऋत्यदले—रक्षोऽधिपतये नमः, वामनाय नमः, अनुपमायै नमः, वरुणाय नमः, सार्वभौमाय नमः, ताम्रकर्ण्यै नमः। ततो वायव्ये—वायवे नमः, अञ्जनाय नमः, शुभ्रदन्त्यै नमः। तत उत्तरदले—कुबेराय नमः, नीलाय नमः, अङ्गनायै नमः। तत ऐशान्ये—ईशानाय नमः, कुमुदाय नमः, अञ्जनावत्यै नमः। ततो मध्यदले—विष्णवे नमः, श्रियै नमः, सूर्याय नमः, पृथिव्यै नमः, अन्तरिक्षाय नमः। पुनः पूर्वादितः—वज्राय नमः, शक्तये नमः, दण्डाय नमः, खड्गाय नमः, पाशाय नमः, अङ्कुशाय नमः, गदायै नमः, शूलाय नमः। एवं सर्वत्र प्रणवादिनमोन्तेन सम्पूज्य गजं च पञ्चोपचारैः पूजयेत्। ततः गजस्य कर्णयोरभिमन्त्रयेत्। (करिणं तं समारुह्य कृत्वा तस्य प्रदक्षिणम्) ॐ श्रीगजस्त्वं हृतो राज्ञा भवानस्य गजाग्रणीः। गन्धमाल्याम्बुभक्ष्यैस्त्वां पूजयिष्यति पार्थिवः ॥ लोकस्तदाज्ञया पूजां करिष्यति तथा तव। पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे ॥ तिर्यग्भावं समुत्सृज्य दिव्यभावमनुस्मर। देवासुरे तथा युद्धे श्रीगजस्त्रिदशैः कृतः ॥ ऐरावतः स्वतः श्रीमान् विष्णुर्नाम च वारणः। श्रीगजानां तु यत्तेजः सर्वमेवापतिष्ठति ॥ तत्तेजस्तव नागेन्द्र दिव्यभावसमन्वितम्। उपतिष्ठतु भद्रं ते व्रज राजानमाहवे ॥ इत्येवमभिसंमंत्र्य शुभेऽहनि नराधिपः। आरोहयेत्ततो नागं सर्वमङ्गलसंयुतम् ॥ ज्येष्ठायोगे पुरा तत्र गजाष्टौ च महाबलाः। पृथिवीमावहन् पूर्वं सशैलवनकाननाम् ॥ कुमुदैरावतौ पद्मः पुष्पदन्तोऽथ वामनः। सार्वभौमः सुप्रतीकोऽप्यञ्जनोऽमितविक्रमः ॥ सर्वे ह्येते महावीर्या इत्यष्टौ देवयोनयः। तेषां पुत्राश्च पौत्राश्च बलान्यष्टौ समाश्रिताः ॥ भद्रमल्लो मृगश्चैव गजः संकीर्ण एव च। नानारत्ने प्रसूतास्ताम् स्मर योनिं महागज ॥ पान्तु वो वसवो रुद्रा आदित्याश्च मरुद्गणाः। भर्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम् ॥

तेजस्वी खड्गपाणिर्भयानकः सवर्णासम्भवः सौरी रेमन्तस्त्वं प्रसीद मे ॥ एष ध्यानपुष्पाञ्जलिः ॐ साश्वरेमन्ताय नमः। ततोऽञ्जलिं बध्वा—ॐ सूर्यपुत्र महाबाहो छायाहृदयनन्दन। शान्तिं कुरु तुरङ्गाणां रेमन्ताय नमोऽस्तु ते ॥ इति प्रणमेत्। ततः पुष्पाक्षतमादाय—ॐ उच्चैःश्रव इहागच्छ इह तिष्ठेत्यावाह्य, ॐ उच्चैःश्रवसे नमः, इति पञ्चोपचारैः पूजयेत्। ततोऽश्वकर्णे जपेत्—ॐ उच्चैःश्रवो नमस्तुभ्यं नमः क्षीराब्धिनन्दन। वाहान् वर्धय वाहेन्द्र सर्वोत्पातं विनाशय ॥ येन सत्येन रेमन्त येन सत्येन भास्करम्। वहसे तेन सत्येन विजयस्व वहस्व माम् ॥ एवं महानवमीपर्यन्तं प्रत्यहं पूजयेत्। ततो धान्य-भल्लातक-वचा-कुष्ठ-सर्षप-लोह-निम्बपत्र-गुग्गुलु-घृत-हिङ्गुभिः पञ्चरङ्गसूत्रेण पीतवस्त्रैश्च पोटलिकां कृत्वा अश्वकण्ठे वध्नीयात् (१)।

## अथ षष्ठ्यां गजपूजा

शालायाः (२) प्रागुदग्भागे स्थण्डिलं कल्पयेत् बुधः। चतुर्द्वारं चतुर्हस्तं मण्डपं तु सुशोभनम् ॥ तत्राङ्गं षोडशदलं निर्मातव्यं सकर्णिकम्। सिततण्डुलचूर्णेन प्रयत्नेन मनीषिणा ॥ विदिक्षु पूर्णकलशान् पूर्णपात्रयुतान् न्यसेत्। सप्तहस्तेषु दण्डेषु पताकांश्च तथा न्यसेत् ॥ दिग्गजानान्तु विन्यासमौषधीभिः प्रकल्पयेत् ॥ ततः कुशादिकमादाय—ओमद्याश्विने मासि शुक्ले पक्षे षष्ठ्यां तिथौ अमुकगोत्रः श्री अमुकशर्माऽहं गजसमृद्धिकामः कुमुदैरावतादीन्

(१) यजमानो राजा चेत्—अश्वशालायां निम्बाज्यसर्षपांश्च दद्यात्। छागबलिदानं च कारयेत्। तत्र सङ्कल्पः—ओमद्येत्यादि अश्वानामुत्पातपीडाप्रशमनपूर्वकदीर्घायुष्ट्वसमृद्धिकामोऽमुं छागं वह्निदैवतं रेमन्तायाऽहं घातयिष्ये। इति बलिं दत्त्वा गीतवाद्यादिकं कारयेत्। ताडनवाहनादि वर्जयेत्।

(२) ततः षष्ठ्यां गजपूजा कार्या—ज्येष्ठायोगे पुरा तत्र……नक्षत्रं तच्च पूजयेत् ॥ इति ब्रह्मपुराणवचनात् महानवमीपर्यन्तं प्रत्यहं पूजयेत्। इयं गजपूजा नृपैरेव कार्या न तु गृहस्थैरनावश्यकत्वादिति सर्वनिबन्धस्वरसः।





दिग्गजान् पूजयिष्ये ॥ इति सङ्कल्प्य, इन्द्रादीनां प्रत्येकं सम्बोधनान्तपदेनावाह्य चतुर्थ्यन्तपदेन पञ्चोपचारैः पूजयेत्। तद्यथा—पूर्वदले—इन्द्राय नमः, ऐरावताय नमः, अभ्रमवे नमः, अग्नये नमः, पद्माय नमः, कपिलायै नमः। ततो दक्षिणदले—यमाय नमः, पुष्पदन्ताय नमः, पिङ्गलायै नमः। ततो नैर्ऋत्यदले—रक्षोऽधिपतये नमः, वामनाय नमः, अनुपमायै नमः, वरुणाय नमः, सार्वभौमाय नमः, ताम्रकर्ण्यै नमः। ततो वायव्ये—वायवे नमः, अञ्जनाय नमः, शुभ्रदन्त्यै नमः। तत उत्तरदले—कुबेराय नमः, नीलाय नमः, अङ्गनायै नमः। तत ऐशान्ये—ईशानाय नमः, कुमुदाय नमः, अञ्जनावत्यै नमः। ततो मध्यदले—विष्णवे नमः, श्रियै नमः, सूर्याय नमः, पृथिव्यै नमः, अन्तरिक्षाय नमः। पुनः पूर्वादितः—वज्राय नमः, शक्त्यै नमः, दण्डाय नमः, खड्गाय नमः, पाशाय नमः, अङ्कुशाय नमः, गदायै नमः, शूलाय नमः। एवं सर्वत्र प्रणवादिनमोन्तेन सम्पूज्य गजं च पञ्चोपचारैः पूजयेत्। ततः गजस्य कर्णयोरभिमन्त्रयेत्। (करिणं तं समारुह्य कृत्वा तस्य प्रदक्षिणम्) ॐ श्रीगजस्त्वं हृतो राज्ञा भवानस्य गजाग्रणीः। गन्धमाल्याम्बुभक्ष्यैस्त्वां पूजयिष्यति पार्थिवः ॥ लोकस्तदाज्ञया पूजां करिष्यति तथा तव। पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे ॥ तिर्यग्भावं समुत्सृज्य दिव्यभावमनुस्मर। देवासुरे तथा युद्धे श्रीगजस्त्रिदशैः कृतः ॥ ऐरावतः स्वतः श्रीमान् विष्णुर्नाम च वारणः। श्रीगजानां तु यत्तेजः सर्वमेवापतिष्ठति ॥ तत्तेजस्तव नागेन्द्र दिव्यभावसमन्वितम्। उपतिष्ठतु भद्रं ते व्रज राजानमाहवे ॥ इत्येवमभिसंमन्त्र्य शुभेऽहनि नराधिपः। आरोहयेत्ततो नागं सर्वमङ्गलसंयुतम् ॥ ज्येष्ठायोगे पुरा तत्र गजाष्टौ च महाबलाः। पृथिवीमावहन् पूर्वं सशैलवनकाननाम् ॥ कुमुदैरावतौ पद्मः पुष्पदन्तोऽथ वामनः। सार्वभौमः सुप्रतीकोऽप्यञ्जनोऽमितविक्रमः ॥ सर्वे ह्येते महावीर्या इत्यष्टौ देवयोनयः। तेषां पुत्राश्च पौत्राश्च बलान्यष्टौ समाश्रिताः ॥ भद्रमल्लो मृगश्चैव गजः संकीर्ण एव च। नानारत्ने प्रसूतास्ताम् स्मर योनिं महागज ॥ पान्तु वो वसवो रुद्रा आदित्याश्च मरुद्गणाः। भर्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम् ॥

न्तुहि जयं युद्धे समये स्वस्ति नो व्रज । श्रीस्ते सोमाद् बलं कृष्णात् तेजः । सूर्याज्जवोऽनिलात् ॥ शौर्यं मेरोर्जवं रुद्राद्, यशो देवपुरन्दरात् । मेरुः ३ रुश्च नागाश्च दिशश्च सह दैवतैः ॥ अश्विभ्यां सह गन्धर्वाः पान्तु त्वां सर्वतः सदा । युद्ध रक्षन्तु नागास्त्वां दिवश्च सह दैवतैः ॥ अश्विन्यौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा (१) ॥

## अथ षष्ठ्यां बिल्वाभिमन्त्रणविधिः

षष्ठ्यां सायङ्काले(२) बिल्ववृक्षसमीपं गत्वा तत्र स्थलं परिष्कृत्य सर्वोपचारविधिम्परिकल्प्य आचम्य कुशत्रय-तिलजलान्यादाय—ओमद्याश्विने मासि शुक्ले पक्षे षष्ठ्यां तिथौ सायाह्ने सर्वोपद्रवशान्तिकामो बिल्वाभिमन्त्रणमहं करिष्ये । इति सङ्कल्प्य—ॐ विल्ववृक्ष महाभाग सदा त्वं पापनाशनः । मम बिघ्नविनाशाय विल्ववृक्षाय ते नमः॥ इति प्रणम्य—ॐ त्र्यम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् । इति जलेन बिल्ववृक्षं स्नापयेत् । तत एषोऽर्घः ॐ विल्ववृक्षाय नमः । इति पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिमादाय—ओं नमो बिल्वतरवे सदा शङ्कररूपिणे । सफलानि ममाङ्गानि कुरुष्व शिवहर्षद ॥ एष पुष्पाञ्जलिः ओं बिल्ववृक्षाय नमः । ततो बिल्ववृक्षे ओं भूर्भुवः स्वर्भगवति दुर्गे इहागच्छ इह तिष्ठेत्यावाह्य ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते ॥ इति मन्त्रेण पञ्चोपचारैः सम्पूज्य गीतवाद्यादिभिः देवीम्बोधयेत् । तद्यथा अञ्जलिं बद्ध्वा—ओं रावणस्य बधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि

(१) पूजान्ते छागबलिं च दद्यात् । तत्र सङ्कल्पः—ओमद्येत्यादिगजानामुत्पातपीडाप्रशमनपूर्वकसमृद्धिकामोऽमुं छागं वह्निदैवतमैरावतादिदिग्गजेभ्योऽहं घातयिष्ये इति ।

(२) देवीपुराणे—ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् ।

महाकालसंहितायाम्—षष्ठ्यां सायं प्रकुर्वीत बृल्ववृक्षेऽधिवासनम् । रजन्याद्ये मुहूर्ते तु चण्डिकामधिवासयेत् ॥

कृतः परा । अहमस्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः । तस्मादहन्त्वा प्रतिबोधयामि विभूतिराज्यप्रतिपत्तिहेतोः । यथैव रामेण हतो दशास्यस्तथैव शत्रून् विनिपातयामि ॥ अशेषसुखलाभाय नानाविभवहेतवे । नेतव्यः श्वोदिते गेहे सर्वकामप्रदो भव ॥ नमस्ते बिल्ववृक्षाय सर्वकामप्रदाय च । दातव्यं श्वोदिते मह्यं पूजनीयं फलद्वयम् ॥ महादेवप्रियोऽसि त्वं श्रीवृक्षः सर्वकामदः । दुर्गायागनिमित्तं हि शाखामेकां प्रयच्छ मे ॥ इति पुष्पाञ्जलिं दत्त्वा, अञ्जलिम्बद्ध्वा—ओं पल्लवैः श्रीफलोपेतैः शाखाभिः सुरनायिके । पल्लवे संस्थिते देवी गृहाणार्चां सुरेश्वरि ॥ त्रैलोक्यनर्मिते देवि नमस्ते शङ्करप्रिये । एह्येहि भगवत्यम्ब बिल्ववृक्षनिवासिनि ॥ श्वोदिते वर्तते कार्यमतस्त्वां पूजयाम्यहम् ॥ इति बोधयित्वा बिल्वतरुं स्पृशन्नामन्त्रयेत्—ओं मेरुमन्दरकैलासहिमवच्छिखरे गिरौ । जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः ॥ श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः ॥ ततः पीतसूत्रेण बिल्ववृक्षं वेष्टयित्वा प्रणमेत् । आचारात् पीतवस्त्रेण छेद्यशाखान्तर्गतफलयुगलवेष्टनं कुर्यात् । ततः ओं सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते । भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ इति प्रणम्य नीराजनं कुर्यात् ।

## अथ महासप्तम्यां नवपत्रिकास्थापनविधिः

महासप्तम्यां (१) प्रातः कृतनित्यक्रियो यजमानः पूर्वदिनाभिमन्त्रितबिल्ववृक्षसमीपं गत्वा पूजोपकरणान्यासाद्य

(१) देवीपुराणे—आश्विने शुक्लपक्षे तु सप्तम्यादितिथित्रये । महाशब्दः प्रयोक्तव्यो नान्यथेति बिनिश्चयः ॥

ज्योतिर्निबन्धे—आश्विनस्य सिते पक्षे सुमुहूर्तेन सप्तमी । तस्यां च पत्रिकापूजा कर्तव्या नरनायकैः ॥ प्रशस्तां सफलां बिल्वशाखामाहृत्य पूजयेत् । दुर्गापूजा च शाखायां बिल्वे वा यस्तु पूजयेत् ॥ देवीपुराणे—सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् । पत्रीप्रवेशात् पूर्वेद्युः सायाह्ने बिल्ववासिनीम् ॥ चण्डीमामन्त्रयेद्विद्वान् नात्र षष्ठीपुरस्क्रिया । नन्दिकेश्वरः—मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत् ॥ तिथितत्त्वे—भगवत्याः प्रवेशादिविसर्गान्ताश्च या क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद् बुधः ॥

आचम्य बिल्ववृक्षं पञ्चोपचारैः सम्पूज्य कृताञ्जलिः प्रसादयेदनेन—ॐ वनस्पते नमस्तुभ्यं वृक्षराज शिवप्रिय। दुर्गासम्प्रीतिकामोऽहं करोम्यर्चां तवाद्य भोः। ॐ बिल्ववृक्ष महाभाग सर्वदा शङ्करप्रिय। गृहीत्वा तव शाखान्तु दुर्गापूजां करोम्यहम्॥ शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो॥ इति प्रसाद्य—ॐ छिन्धि छिन्धि फट् ह्रीं स्वाहा। ॐ दुर्गे दुर्गे रक्षिणि स्वाहा। इति मन्त्रद्वयेन निशितच्छुरिकया फलयुगलयुतां बिल्वशाखामेकच्छेदेन (१) छेदयित्वा तां हस्तेन धृत्वा प्रार्थयेदनेन—ॐ देवैर्गृहीत्वा शाखा ते पूजिता चेति विश्रुतिः। पुत्रायुर्धनवृद्ध्यर्थं नेष्यामि त्वामुमाप्रियाम्॥ बिल्वशाखां समाश्रित्य राज्यं देवि प्रयच्छ मे॥ ॐ आगच्छ चण्डिके देवि सर्वकल्याणहेतवे। कात्यायनि गृहाणार्चां नमस्ते शङ्करप्रिये॥ इति प्रणम्य दोलादिना समानीय दुर्गापूजनगृहप्राङ्गणे पीठोपरि स्थापयित्वा—ॐ बिल्वशाखायै नमः। इति पञ्चोपचारैः पूजयेत्। ततो गृहद्वारमागत्य गोमयेन कृतमण्डले भूतानि सम्पूज्याऽपसारयत्। तद्यथा—ॐ भूतानि इहागच्छ इह तिष्ठेत्यावाह्य पाद्यादिभिः ॐ भूतेभ्यो नमः। इति सम्पूज्य माषभक्तबलिं तेभ्यो दद्यादनेन—ॐ भूताः प्रेताः पिशाचाश्च ये सन्त्यत्र भूतले। ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः॥ पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा। देशादस्माद् विनिःसृत्य पूजां पश्यन्तु मत्कृताम्॥ ॐ भूतेभ्यः एष माषभक्तबलिर्नमः इति सपुष्पजलमादायोत्सृज्येत्। ततः तालत्रयेण 'ॐ फट्' इति मन्त्रेण सप्तवारानभिमन्त्रितान् गौरसर्षपयवपुष्पाणि चतुर्दिक्षु विकीर्य भूतानपसारयेत्। अथ पुनर्बिल्वशाखायाम्—ॐ चामुण्डायै नमः। इति पञ्चोपचारैः सम्पूज्य देव्या आसनं (बिल्वशाखाधारपीठं) धृत्वा—ॐ श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः। नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः॥ इति चामुण्डतया ध्यात्वा—'ॐ चामुण्डे चल चल' इति चालयित्वा

(१) मत्स्यसूक्ते—स्त्रीणां दृष्टिः पशोर्दृष्टिर्यथा नैव तु छेदने। तथा कुर्यात् प्रयत्नेन शिविकायां प्रवेशयेत्। उन्मत्तं पतितं क्लीवं वामनं छिद्रसंयुतम्। न योजयेद् दरिद्रञ्च मन्त्रहीनं न वेशयेत्॥



प्रतिमासन्निहितां गीतवाद्यादिना गृहं प्रवेश्य—ॐ आरोपितासि दुर्गे त्वं मृन्मये श्रीफलेऽपि च। स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव॥ इति संचाल्य पूजास्थाने पीठोपरि स्थिरीकृत्य देव्या दक्षिणदिशि श्वेतापराजितालताबद्धा कदली-दाडिम-धान्य-हरिद्रा-मान-कचु-बिल्व-अशोक-जयन्तीरूपा नवपत्रिकाः (१) स्थापयेत्। ततः प्रत्येकं स्नपयेत्। कुशादिकमादाय—ओमद्यैत्यादि अमुकगोत्रोऽमुकशर्माहं सप्तजन्मकृतपापक्षयकामो (२) नवपत्रिकारूपां दुर्गां स्नापयिष्ये। इति सङ्कल्प्य-तत्र प्रथमं शुद्धजलेन १-ॐ कदलीतरुसंस्थासि विष्णोर्वक्षःस्थलाश्रये। स्नापयाम्यद्य पत्रि त्वां नमस्ते चण्डनायिके॥ २-ॐ दाडिम्यघविनाशाय क्षुन्नाशाय सदा भुवि। निर्मिता फलकामाय प्रसीद त्वं हरिप्रिये॥ ३-ॐ लक्ष्मीस्त्वं धान्यरूपासि प्राणिनां प्राणदायिनि। स्थिरात्यन्तं हि नो भूत्वा गृहे मे कामदा भव॥ ४-ॐ हरिद्रे हररूपासि शङ्करस्य सदाप्रिये। रुद्ररूपेण देवि त्वं सर्वशान्तिं प्रयच्छ मे॥ ५-ॐ मानो मान्येषु वृक्षेषु माननीयः सुरासुरैः। स्नापयामि महादेवि मानं देहि नमोस्तु ते॥ ६-ॐ कच्चित्वं स्थावरस्थासि सदा सिद्धिप्रदायिनि। दुर्गारूपेण सर्वत्र स्नानेन विजयं कुरु॥ ७-ॐ श्रीफल श्रीनिकेतोऽसि सदा विजयवर्धनः। देहि मे हितकामाश्च प्रसन्नो भव सर्वदा॥ ८-ॐ स्थिरा भव सदा दुर्गे अशोके शोकहारिणि। मया त्वं पूजिता दुर्गे स्थिरा भव हरप्रिये॥ ९-ॐ जयन्ती जयरूपासि जगतां जयकारिणि। स्नापयामीह देहि त्वां जयन्देहि गृहे मम॥ ततो नदीजलेन नवपत्रिकाः प्रत्येकं स्नपयेत्। ॐ आत्रेयी भारती गङ्गा यमुना च सरस्वती। सरयूर्गण्डकी श्वेता कावेरी कौशि-

(१) रम्भा कचुर्हरिद्रा च जयन्ती बिल्वदाडिमौ। अशोको मानकं चैव धान्यादिर्नवपत्रिका॥ समूला पत्रिका ग्राह्या हरिद्राधान्यकं विना॥

(२) महाष्टम्याम्—अष्टसहस्रवर्षावच्छिन्नस्वर्गाधिकरणकस्थितिकामः। नवम्यां तु धनपुत्रविवर्धनशतयज्ञफलकामः। इति।

की तथा ॥ भोगावती च पाताले स्वर्गे मन्दाकिनी तथा । एताः सुमनसो भूत्वा भृङ्गारैः स्नपयन्तु ते ॥ ॐ देवा यक्षास्तथा नागा गन्धर्वाऽप्सरसाङ्गणाः । ऋषयो देवपुत्राश्च भृङ्गारैः स्नपयन्तु ते ॥ दुर्गा चण्डेश्वरी चण्डी वाराही कार्तिकी तथा । नारसिंही तथा काली इन्द्राणी वैष्णवी तथा ॥ एताः सुमनसो भूत्वा भृङ्गारैः स्नपयन्तु ते ॥ इति नवपत्रिकाः स्नपयेत् । ततः शुभे लग्ने बिल्वपत्रे घृतेन कज्जलं विधाय तेन प्रतिमायाः प्रथमं दक्षिणं, ततो वामं, तत ऊर्ध्वं चक्षुर्दद्यात् (कज्जलं कुर्यात्) तत्र मन्त्रः—ॐ इदं नेत्रत्रयं दिव्यं चन्द्रसूर्याग्निसमप्रभम् । ताराकारमयं देवि पश्य त्वं भुवनत्रयम् ॥ ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॥ इदं चक्षुः ॐ भगवत्यै श्री दुर्गादेव्यै नमः । इति दत्त्वा आचारात् पटयवनिकामपसार्य्य कूष्माण्डबलिं प्रदर्शयेत् । ततो दक्षिणे पूजार्थवस्तूनि वामे नैवेद्यादिकं सम्पाद्य पूजामारभेत् ।

## तत्र महासप्तम्यां दुर्गापूजाविधिः

कुश-जल-तिलानादाय—ओमद्य आश्विने मासि शुक्ले पक्षे महासप्तम्यां तिथौ (१)—'अमुकगोत्रस्य मम श्री अमुकशर्मणः' सपरिवारस्योपस्थितशरीराविरोधेन महाभयाभावपूर्वकविपुलधनधान्यसुतान्विताऽतुलविभूतिचतुर्वर्गफलप्राप्तिपूर्वकश्रीदुर्गाप्रीतिकामः साङ्गसायुधसवाहनसपरिवारायाः भगवत्याः श्रीदुर्गादेव्याः वार्षिकशरत्कालीनपूजनमहं करिष्ये । इति सङ्कल्प्य कुशपुष्पाक्षतान्यादाय देव्याः हृदये अनामिकाङ्गुष्ठाभ्याम्—ओं मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनो त्वरिष्टं यज्ञꣳसमिमन्दधातु विश्वेदेवास इह मादयन्तामोम्प्रतिष्ठ ॥ ओं भूर्भुवः स्वः साङ्गसायुधसवाहनसपरिवारभगवति दुर्गे देवि इह सुप्रतिष्ठिता भव । इति देव्याः प्राणप्रतिष्ठां विधाय आवाहयेत् ।

---

(१) ग्रामपूजायां तु—'अमुकगोत्रस्य मम श्री अमुकशर्मणः' इत्यस्य स्थाने—ऐतद्ग्रामवासिनां नानानां गोत्राणां सकलजनानामेतत्पूजोपकारकाणामन्यद्ग्रामवासिनां च' इति योज्यम् ।



(एवं १५५ पृष्ठे सर्वासु प्राणप्रतिष्ठां वक्ष्ये) ततः पुष्पमादाय—ओं आवाहयाम्यहं देवीं मृन्मये श्रीफलेऽपि च । आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥ ओं कैलासशिखराद् देवि विंध्याद्रेः हिमपर्वतात् । आगत्य बिल्वशाखायां मृन्मये कुरु सन्निधिम् ॥ ओं दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय । यज्ञभागं गृहाणेमं योगिनीकोटिभिः सह । ओं ऐँ ह्रीं क्लीं चामुण्डे दक्षयज्ञविनाशिनि साङ्गसायुधसवाहनसपरिवारश्रीदुर्गे देवि इहागच्छ इह तिष्ठेति स्थापयित्वा कृताञ्जलिः पठेत्—ओं एह्येहि भगवत्यम्बे शत्रुक्षयजयप्रदे । भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते ॥ पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः । पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे ॥ ओं दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय । यज्ञभागं गृहाणेममष्टाभिः शक्तिभिः सह ॥ ओं आयाहि वरदे देवि लोकानुग्रहकारिणि । यज्ञभागं गृहाणेमं यन्मया परिकल्पितम् ॥ ओं दुर्गे देवि जगन्मातः सृष्टिसंहारकारिणि । पत्रिकासु समस्तासु सान्निध्यमिह कल्पय ॥ शारदीयामिमां पूजां करोमि कमलेक्षणे । आज्ञापय महादेवि दैत्यदर्पविनाशिनि ॥ चण्डि त्वं चण्डरूपासि सुरतेजो महाबले । प्रविश्य तिष्ठ यज्ञेऽस्मिन् यावत् पूजां करोम्यहम् ॥ ततो—ओं जटाजूटसमायुक्तामर्धेन्दुकृतशेखराम् । लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥ अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ॥ नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ॥ सुचारुदशनां तद्वत् पीनोन्नतपयोधराम् । त्रिभंगस्थानसंस्थानां महिषासुरमर्दिनीम् ॥ कपालं खेटकं घण्टां दर्पणं तर्जनीं धनुः । ध्वजं डमरुकं पाशं वामहस्तेषु बिभ्रतीम् ॥ शक्तिं च मुद्गरं शूलं खड्गं वज्रांकुशं तथा । शङ्खं चक्रं शरञ्चैव दक्षिणेषु च बिभ्रतीम् ॥ अधस्तान्महिषं तद्वद् विशिरस्कं प्रदर्शयेत् । शिरश्छेदोद्भवं तद्वद् दानवं खड्गपाणिनम् । हृदि शूलेन निर्भिन्नं निर्गतं तु विभूषितम् । रक्तं रक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम् ॥ वेष्टितं नागपाशेन भ्रुकुटीकुटिलाननम् । सपाशवामहस्तेन धृतकेशञ्च दुर्गया ॥ वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् ॥ देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ॥ किञ्चिदूर्ध्वं तथा वाममंगुष्ठं महिषोपरि । स्तूयमानं च तद्रूप-

मगरैः सन्निवेशयेत् ॥ उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका । चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥ आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् । चिन्तयेत् सततं दुर्गां धर्मकामार्थमोक्षदाम् ॥ इदं ध्यानपुष्पं साङ्गसायुधसपरिवारायै श्रीदुर्गादेव्यै नमः ।

ततः स्वागतं—ओं स्वागतं ते महामाये चण्डिके सर्वमङ्गले । पूजां गृहाण विविधां सर्वकल्याणकारिणि ॥ इति स्वागतम् कृत्वा—ओं देवेशि भक्तिसुलभे परिवारसमन्विते । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥ इति स्थिरीकृत्य आसनं दद्यादनेन—ओं आसनं भास्वरं तुङ्गं मांगल्यं सर्वमङ्गले । भजस्व जगतां मातः प्रसीद जगदीश्वरि ॥ इदमासनं साङ्गसायुधसवाहनसपरिवारायै भगवत्यै श्रीदुर्गादेव्यै नमः । ततः पाद्यम्—ओं गङ्गादि-सलिलाधारं तीर्थं मन्त्राभिमन्त्रितम् । दूरयात्राश्रमहरं पाद्यं तत्प्रतिगृह्यताम् ॥ इदं पाद्यं साङ्ग०, तत उद्वर्तनम्—ओं तिलतैलसमायुक्तं सुगन्धिद्रव्यनिर्मितम् । उद्वर्तनमिदं देवि गृहाण त्वं प्रसीद मे ॥ ततोऽर्घ्यम्—ओं तिलतण्डुल संयुक्तं कुशपुष्पसन्वितम् । सुगन्धं फलसंयुक्तमर्घ्यं देवि गृहाण मे ॥ एषोऽर्घ्यः साङ्ग० । तत आचमनीयम्—ओं स्नानादिकं विधायापि यतः शुद्धिरवाप्यते । इदमाचमनीयं हि दुर्गे देवि प्रगृह्यताम् । इदमाचमनीयं साङ्ग० । ततः स्नानीयम्—ॐ खमापः पृथिवी चैव ज्योतिषं वायुरेव च । लोकसंस्मृतिमात्रेण वारिणा स्नापयाम्यहम् ॥ इदं स्नानी-यम् साङ्ग० । ततः अष्टगार्घ्यः—ॐ जगत्पूज्ये त्रिलोकेशि सर्वदानवभञ्जिनि । अष्टगार्घ्यं गृहाण त्वं देवि विश्वार्ति-हारिणि ॥ एष अष्टगार्घ्यः साङ्ग० । ततो दधि–सिता–घृत–मधु–मिश्रितात्मकं कांस्यपात्रेण पिहितं कांस्यपात्रस्थं मधुपर्कमादाय—ॐ मधुपर्कं महादेवि ब्रह्माद्यैः कल्पितं तव । मया निवेदितं भक्त्या गृहाण गिरिपुत्रिके ॥ एष मधु-पर्कः साङ्ग० । ततः पुनराचमनीयम्—ॐ स्नानादिकं पुरः कृत्वा पुनः शुद्धिरवाप्यते । पुनराचमनीयं ते दुर्गे देवि प्रगृह्यताम् ॥ इदं० । ततश्चन्दनम्—ओं मलयाचलसम्भूतं नानागन्धसमन्वितम् । शीतलं बहुलामोदं चन्दनं गृह्यता-



मिदम् ॥ इदं श्रीखण्डचन्दनं० । ततो रक्तचन्दनं—ओं रक्तानुलेपनं देवि स्वयं देव्या प्रकाशितम् । तद् गृहाण महाभागे शुभं देहि नमोस्तु ते ॥ इदं रक्तचन्दनं साङ्ग० । ततः सिन्दूरम्—ॐ सिन्दूरं सर्वसाध्वीनां भूषणाय विनि-र्मितम् । गृहाण वरदे देवि भूषणानि प्रयच्छ मे ॥ इदं सिन्दूराभरणं साङ्गसायुधसवाहनसपरिवारायै श्रीदुर्गादेव्यै-नमः । ततः कुङ्कुमम्—ॐ जपापुष्पप्रभं रम्यं नारीभालविभूषणम् । भास्वरं कुङ्कुमं रक्तं देवि दत्तं प्रगृह्य मे ॥ इदं कुङ्कुमाभरणम्० । ततोऽक्षतम्—ॐ अक्षतं धान्यजं देवि ब्रह्मणा निर्मितं पुरा । प्राणदं सर्वभूतानां गृहाण वरदे शुभे । इदमक्षतम्० । ततः पुष्पम्—चलत् परिमलामोदमत्तालिगणसङ्कुलम् । आनन्दनन्दनोद्भूतं दुर्गायै कुसुमं नमः ॥ एतानि पुष्पाणि० । ततो विल्वपत्रं—ॐ अमृतोद्भवं श्रीवृक्षं शङ्करस्य सदा प्रियम् । पवित्रं ते प्रयच्छामि सर्वकार्यार्थ-सिद्धये ॥ इदं विल्वपत्रम्० । ततो मालाम्—ॐ नानापुष्पविचित्राढ्यां पुष्पमालां सुशोभनाम् । प्रयच्छामि सदा भद्रे गृहाण परमेश्वरि ॥ इदं माल्यम्० । ततो वस्त्रम्—ॐ तन्तुसन्तानसंयुक्तं कलाकौशलकल्पितम् । सर्वाङ्गाभरण-श्रेष्ठं वसनं परिधीयताम् ॥ इदं पीतवस्त्रं बृहस्पतिदैवतं साङ्ग० । ततो द्वितीयवस्त्रम्—यामाश्रित्य महादेवो जगत्संहा-रकः सदा । तस्यै ते परमेशान्यै कल्पयाम्युत्तरीयकम् ॥ इदं द्वितीयवस्त्रम्० । ततोऽलङ्करणम्—ॐ सौवर्णाद्यलङ्कारं कङ्कणादिविभूषितम् । हारकेयूरयुक्तानि नूपुराणि गृहाण मे ॥ इदमलङ्करणम्० । ततो धूपम्—ॐ गुग्गुलं घृतसंयुक्तं नानाभक्ष्यैश्च संयुतम् । दशाङ्गं गृह्यतां धूपं दुर्गे देवि नमोस्तु ते ॥ एष धूपः० । ततो दीपः—ॐ मार्तण्डमण्डलान्तस्थ-चन्द्रविम्बाग्नितेजसाम् । निधानं देवि दीपोऽयं निर्मितस्तव भक्तितः ॥ एष दीपः० । तत सुगन्धितद्रव्यम्—ओं परमा-नन्दसौरभ्यं परिपूर्णदिगम्बरम् । गृहाण सौरभं दिव्यं कृपया जगदम्बिके ॥ इदं सुगन्धितद्रव्यम्० । ततः कर्पूरदीपः—ओं त्वं चन्द्रसूर्यज्योतींषि विद्युदग्न्योस्तथैव च । त्वमेव जगतां ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ एष कर्पूरदीपः० । ततो नानाविधनैवेद्यानि—ओं दिव्यान्नरससंयुक्तं नानाभक्ष्यैस्तु संयुतम् । चोष्यपेयसमायुक्तमन्नं देवि गृहाण मे ॥

एतानि नानाविधनैवेद्यानि०। ततः पायसम्—ओं गव्यसर्पिःपयोयुक्तं नानामधुरमिश्रितम्। निवेदितं मया भक्त्या परमान्नं प्रगृह्यताम्॥ इदं पायसम्०। ततो मोदकम् ( लड्डू )—ओं मोदकं स्वादु रुचिरं कर्पूरादिभिरन्वितम्। मिश्रं नानाविधैर्द्रव्यैः प्रतिगृह्याशु भुज्यताम्॥ इदं मोदकम्०। ततोऽपूपादिः—ओं अपूपानि च पक्वानि मण्डका वटकानि च। पायसापूपमन्नं च नैवेद्यं प्रतिगृह्यताम्॥ इदमपूपादिनैवेद्यानि०। ततः फलादीनि—ओं फलमूलानि सर्वाणि ग्राम्याऽरण्यानि यानि च। नानाविधसुगन्धीनि गृहाण देवि यथासुखम्॥ एतानि नानाविधानि फलानि०। ततः पानीयम्—ओं पानीयं शीतलं स्वच्छं कर्पूरादिसुवासितम्। भोजने तृप्तिकृद्यस्मात् कृपया परिगृह्यताम्॥ इदं पानीयम्०। ततः करोद्वर्तनजलम्—ओं कर्पूरादीनि द्रव्याणि सुगन्धीनि महेश्वरि। गृहाण जगतां नाथे करोद्वर्तन-हेतवे॥ इदं करोद्वर्तनजलम्०॥ तत आचमनीयम्—ओं आमोदवस्तु सुरभीकृतमेतदनुत्तम्। गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम्॥ इदमाचनीयम्०। ततः ताम्बूलम्—ओं तमालदलकर्पूरनागवल्लीसमन्वितम्। संशोधितं सुगन्धं च ताम्बूलं प्रतिगृह्यताम्॥ इदं ताम्बूलम्०। ततः कज्जलम्—ओं स्निग्धमुष्णं हृद्यतमं दृशां शोभाकरं तव। गृहीत्वा कज्जलं सद्यो नेत्राण्यञ्जय पार्वति॥ इदं कज्जलम्०। ततः सौवीराञ्जनम्—ओं नेत्रत्रयं महामाये भूषयामल-कज्जलैः। सौवीरकाञ्जनैर्दिव्यैर्जगदम्ब नमोस्तु ते॥ इदं सौवीराञ्जनम्०। ततः आलक्तकम्-ओं त्वत्पादाम्भोजनखर-द्युतिकारिमनोहरम्। आलक्तकमिदं देवि मया दत्तं प्रगृह्यताम्॥ इदमालक्तकम्०। ततश्चामरम्-ओं चामरं चमरी-पुच्छं हेमदण्डसमन्वितम्। मयार्पितं राजचिह्नं चामरं प्रतिगृह्यताम्॥ इदं चामरम्०। ततो व्यजनम्—ओं बर्हिबर्हकृताकारं मध्यदण्डसमन्वितम्। गृह्यतां व्यजनं दुर्गे देहस्वेदापनुत्तये॥ इदं व्यजनम्०। ततो घण्टावाद्यम्—ओं यया भीषयसे दैत्यान् यया पूरयसेऽसुरम्। तां घण्टां सम्प्रयच्छामि महिषघ्नि प्रसीद मे॥ इदं घण्टावाद्यम्०। ततो दक्षिणाद्रव्यम्—ओं काञ्चनं रजतोपेतं नानारत्नसमन्वितम्। दक्षिणार्थं च देवेशि गृहाण त्वं नमोस्तु ते॥ इदं



दक्षिणाद्रव्यम्०। ततः पुष्पाञ्जलिः—ॐ दुर्गे दुर्गे महामाये सर्वशक्तिस्वरूपिणि। त्वं काली कमला ब्राह्मी त्वं जया विजया शिवा॥ त्वं लक्ष्मीर्विष्णुलोकेषु कैलाशो पार्वती तथा। सरस्वती ब्रह्मलोके चेन्द्राणी शक्रपूजिता॥ वाराही नारसिंही च कौमारी वैष्णवी तथा। त्वमापःसर्वलोकेषु ज्योतिर्ज्योतिःस्वरूपिणी॥ योगमाया त्वमेवाऽसि वायुरूपा नभःस्थिता। सर्वगन्धवहा पृथ्वी नानारूपा सनातनी॥ विश्वरूपे च विश्वेशे विश्वशक्तिसमन्विते। प्रसीद परमानन्दे दुर्गे देवि नमोस्तु ते॥ नानापुष्पसमाकीर्णं नानासौरभसंयुतम्। पुष्पाञ्जलिञ्च विश्वेसि गृहाण भक्तवत्सले॥ एष पुष्पाञ्जलिः०। ततो नीराजनम् ( आरार्तिकम् )—ओं कर्पूरवर्तिसंयुक्तं वह्निना दीपितञ्च यत्। नीराजनं च देवेशि गृह्यतां जगदम्बिके॥ इदं नीराजनम्०। ततः पञ्चवर्तिनीराजनम्—ओं पञ्चवर्तिसमायुक्तं गोघृतेन च पूरितम्। नीराजनं जगद्वन्द्ये गृहाणाऽम्ब नमोस्तु ते॥ इदं पञ्चवर्तिनीराजनम्०। ततोऽच्छिद्रावधारणम्—ओं दुर्गे देवि महा-माये याहक्पूजा मया कृता। अच्छिद्रास्तु शिवे साङ्गा तव देवि प्रसादतः॥ ततः क्षमापनम्—ॐ प्रार्थयामि महा-माये यत्किञ्चित् स्खलितं मम। क्षम्यतां तज्जगन्मातः दुर्गे देवि नमोस्तु ते॥ ततः साष्टाङ्गं प्रणमेत्।

## अथ नवपत्रिकासु नवदुर्गापूजाविधिः

ततो नवपत्रिकासु कदल्यां–ब्रह्माणीम्। दाडिमे–रक्तदन्तिकाम्। धान्ये–लक्ष्मीम्। हरिद्रायां–दुर्गाम्। मानके चामुण्डाम्। कचुपत्रे–कालिकाम्। बिल्वपत्रे–शिवाम्। अशोके–शोकरहिताम्। जयन्त्यां–कार्तिकीम्, आवाह्य पूजयेत्। तद्यथा—पुष्पाक्षतमादाय कदल्याम्—ॐ ह्रीँ ब्रह्माणि इहागच्छ, इह तिष्ठेत्यावाह्य, ओं ह्रीँ ब्रह्माण्यै नमः। इति पञ्चोपचारैः संपूज्य पुष्पाञ्जलिमादय—ओं ब्रह्माणि त्वं समागच्छ सान्निध्यमिह कल्पय। रम्भास्वरूपे मे नित्यं शान्ति कुरु नमोऽतु ते॥ एष पुष्पाञ्जलिः०। ततो दाडिमे—ओं ह्रीँ रक्तदन्तिके इहागच्छ०, ॐ रक्तदन्तिकायै नमः इति सम्पूज्य पुष्पाञ्जलिः—ॐ दाडिमि त्वं पुरा युद्धे रक्तबीजस्य संक्षये। उमाकार्यं कृतं यस्मात्तस्मान्मे वरदा

भव॥ ततो धान्ये—ओं ह्रीं लक्ष्मि इहागच्छ०, ओं ह्रीं धान्याधिष्ठात्र्यै लक्ष्म्यै नमः। इति सम्पूज्य, पुष्पाञ्जलिः—ओं जगतः प्राणरक्षार्थं ब्रह्मणा निर्मितं पुरा। उमाप्रीतिकरं धान्यं तस्मात्त्वं रक्ष मां सदा॥ ततो हरिद्रायां-ओं ह्रीं दुर्गे इहागच्छ०, ओं ह्रीं हरिद्राधिष्ठात्र्यै दुर्गायै नमः। इति सम्पूज्य पुष्पाञ्जलिः–ॐ हरिद्रे वरदे देवि उमारूपासि सुव्रते। मम विघ्नविनाशाय पूजां गृह्ण प्रसीद मे॥ ततो मानके-–ॐ ह्रीं चामुण्डे इहागच्छ०, ॐ ह्रीं मानाधिष्ठात्र्यै चामुण्डायै नमः। इति सम्पूज्य पुष्पाञ्जलिः-–ॐ यस्य पत्रे वसेद् देवी मानवृक्षः शचीप्रियः। मम विघ्नविनाशाय पूजां गृह्ण यथासुखम्॥ ततः कचुपत्रे-ॐ ह्रीं कालि इहागच्छ०, ॐ ह्रीं कचुपत्रिकाधिष्ठात्र्यै काल्यै नमः। इति सम्पूज्य पुष्पाञ्जलिः—ॐ महिषासुरयुद्धे त्वं कचुभूतासि सुव्रते। मम चानुग्रहार्थाय आगतासि हरप्रिये॥ ततो बिल्वशाखायाम्—ॐ ह्रीं शिवे इहागच्छ०, ॐ ह्रीं बिल्वाधिष्ठात्र्यै शिवायै नमः। इति सम्पूज्य पुष्पाञ्जलिः–महादेवप्रियकरो वासुदेवप्रियः सदा। उमाप्रीतिकरो वृक्षो बिल्ववृक्ष नमोस्तु ते॥ ततोऽशोके—ॐ ह्रीं शोकरहिते इहागच्छ०, ॐ ह्रीं अशोकाधिष्ठात्र्यै शोकरहितायै नमः। इति सम्पूज्य पुष्पाञ्जलिः—ॐ शिवप्रीतिकरो देवो ह्यशोकः शोकनाशनः। उमाप्रीतिकरो यस्मादशोकं मां सदा कुरु॥ ततो जयन्त्याम्– ॐ ह्रीं कार्तिकि इहागच्छ०, ॐ ह्रीं जयन्त्यधिष्ठात्र्यै कार्तिक्यै नमः। पुष्पाञ्जलिः—ॐ निशुम्भशुम्भमथने सेन्द्रैर्देवगणैः सह। जयन्ति पूजितासि त्वमस्माकं वरदा भव॥ ततोऽञ्जलिं बद्ध्वा—ॐ पत्रिके नवदुर्गे त्वं महादेवमनोरमे। पूजां समस्तां संगृह्य रक्षां कुरु महेश्वरि॥ स्थापितासि महादेवि पत्रिकासु सुरेश्वरि। आयुरारोग्यविजयं देहि देवि नमोऽस्तु ते॥ इति पुष्पाञ्जलिं दद्यात्।

## अथ दुर्गापरिवारपूजाविधिः

ततो देव्याः दक्षिणे लक्ष्मीं ध्यायेत्–ॐ तप्तकाञ्चनसंकाशां द्विभुजां लोललोचनाम्। कटाक्षविशिखोद्दीप्तामञ्जनाञ्चितलोचनाम्॥ शुक्लाम्बरपरीधानां सिन्दूरतिलकोज्ज्वलाम्। शुक्लपद्मासनगतां ध्यायेन्नारायणप्रियाम्॥ इति



ध्यात्वा ॐ मनोजूतिरित्यादिपूर्वोक्तमन्त्रेण प्राणप्रतिष्ठां विधाय ॐ ह्रीं क्लीं भूर्भुवः स्वर्लक्ष्मि इहागच्छ इह तिष्ठेत्यावाह्य पाद्यादिना यथोपचारैः सम्पूज्य पुष्पाञ्जलिमादाय—ॐ विश्वरूपस्य भार्यासि पद्मे पद्मालये शुभे। सर्वतः पाहि मां देवि महालक्ष्मि नमोऽस्तु ते॥ इति पुष्पाञ्जलिं दद्यात्। ततो वामे सरस्वतीं ध्यायेत्–ॐ शंखकुन्देन्दुसंकाशां द्विभुजां पद्मलोचनाम्। कटाक्षविशिखोद्दीप्तां दिव्याम्बरपरिच्छदाम्॥ दिव्याभरणवेशाढ्यां वाग्रूपां परमां भजे॥ इति ध्यात्वा मनोजूतिरित्यनेन महासरस्वत्याः प्राणप्रतिष्ठां विधाय ॐ ह्रीं भूर्भुवः स्वर्महासरस्वति इहागच्छ इह तिष्ठेत्यावाह्य यथोपचारैः सम्पूज्य–ॐ भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः। वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च॥ इति प्रणमेत्। ततो लक्ष्म्या दक्षभागे गणेशं ध्यायेत्–ॐ लम्बोदरं महाकायं गजवक्त्रं त्रिलोचनम्। सर्वदेवमयं देवं पार्वतीनन्दनं भजे॥ इति ध्यात्वा मनोजूतिरिति मन्त्रेण प्राणप्रतिष्ठां विधाय ॐ ह्रीं भूर्भुवः स्वर्गणेश इहागच्छ इह तिष्ठेत्यावाह्य ॐ ह्रीं गं गणेशाय नमः। इति यथोपचारैः सम्पूज्य-–ॐ एकदन्तं महाकायं लम्बोदरगजाननम्। विघ्ननाशकरं देवं हेरम्बं प्रणयाम्यहम्॥ इत्यनेन प्रणमेत्। ततः सरस्वत्याः वामे कार्तिकेयं ध्यायेत्-–ॐ कार्तिकेयं महाभागं मयूरोपरि संस्थितम्। तप्तकाञ्चनवर्णाभं शक्तिहस्तं वरप्रदम्। दिवसं शत्रुहन्तारं नानालङ्कारभूषितम्॥ इति ध्यात्वा मनोजूतिरिति मन्त्रेण प्राणप्रतिष्ठां विधाय ॐ ह्रीं गुहाय कार्तिकेयाय सेनान्यै स्वाहा, ॐ भूर्भुवः स्वः साङ्गसायुधसवाहनश्रीकार्तिकेय इहागच्छ इह तिष्ठेत्यावाह्य उक्तमूलेन ॐ साङ्गसायुधसवाहनश्रीकार्तिकेयाय नमः। इति यथोपचारैः सम्पूज्य–ॐ कार्तिकेय महाभाग गौरीहृदयनन्दन। कुमार रक्ष मां नित्यं दैत्यार्दन नमोस्तु ते॥ इति प्रणमेत्। ततः कार्तिकेयवामे जयां (१) ध्यायेत्–ॐ तप्तकाञ्चनसंकाशां

(१) यत्र जयायाः विजयायाश्च योगिन्याः प्रतिमा तत्र पद्धतिरीत्या प्राणप्रतिष्ठां विधाय पूजयेत्। यत्र प्रतिमाऽभावस्तत्र ऽऽवाह्य पूजयेत्। क्वचित् पद्धतौ जयापूजनतः प्रागेव शिव-गौरी-नन्दिनां पूजनमस्ति। अत्र यथाचाराद् व्यवस्था कर्तव्या।

द्विभुजां लोललोचनाम् । कटाक्षविशिखोपेतां दिव्याम्बरपरिच्छदाम् ॥ दिव्याभरणसंयुक्तां ध्यायेत् सिद्धिप्रदायिनीम् ॥ इति ध्यात्वा मनोजूतिरिति प्राणप्रतिष्ठां विधाय ओं ह्रीं ह्रीं जये इहागच्छ इह तिष्ठेत्यावाह्य ॐ ह्रीं ह्रीं जयायै नमः । इति यथोपचारैः पूजयेत् । ततो गणेशदक्षिणे विजयां ध्यायेत्—ॐ दलिताञ्जनसंकाशां द्विभुजां खञ्जनेक्षणाम् । कटाक्षविशिखोद्दीप्तां कज्जलाञ्चितलोचनाम् ॥ दिव्याम्बरपरीधानां नानारत्नविभूषिताम् । ध्यायेत्तां विजयां नित्यां सर्वसिद्धिप्रदायिनीम् ॥ इति ध्यात्वा मनोजूतिरित्यादिना प्राणप्रतिष्ठां विधाय—ॐ ऐं ह्रीं विजये इहागच्छ इह तिष्ठेत्यावाह्य, ॐ ऐं ह्रीं विजयायै नमः । इति यथोपचारैः (१) पूजयेत् । (ततः प्रथमदिनोक्तक्रमेण दशदिक्पालान् (२) नवग्रहांश्च पूजयेत्) ततो देव्याः वाहनादिपूजां कुर्यात् ।

## अथ दुर्गावाहनादिपूजाविधिः

तत्र (३) प्रथमं सिंहपूजा । पुष्पाण्यादाय—ॐ तीक्ष्णदंष्ट्रः करालास्यः सटाशोभितकन्धरः । चतुरंघ्रिर्वज्रनखो

(१) विजयापूजनोत्तरं क्वचित् ब्रह्मणः सावित्र्याश्च पूजनं दृश्यते । सति सम्भवे तदपि कर्तव्यम् ।

(२) कोष्ठान्तर्गतदिक्पालादिपूजनं क्वचिदुपलभ्यते । प्रथमदिनोक्तपूजनैव गतार्थतेति केचित् ।

(३) सति सम्भवे अत्र देव्या अस्त्र-शस्त्रपूजाऽपि कर्तव्या (प्रधानपूजायां 'साङ्गसायुध' इत्युक्तत्वात् सति सम्भवे' इत्युक्तं, यदीच्छेत्तदा वाहनपूजातः प्रागेव कुर्यात्) तद्यथा—ओं कपाल इहागच्छ इह तिष्ठेत्यावाह्य ॐ कपालाय नमः इति पञ्चोपचारैः पूजयेत् । एवम्—ओं खेटक इहागच्छ, खेटकाय नमः । ओं घण्टे इहागच्छ, घण्टायै नमः । ओं धनुरिहागच्छ, धनुषे नमः । ओं ध्वज इहागच्छ, ध्वजाय नमः । ओं डमरुक इहागच्छ, डमरुकाय नमः ओं नागपाश इहागच्छ, नागपाशाय नमः, ओं शक्ते इहागच्छ, शक्तये नमः । ओं शूल इहागच्छ, शूलाय नमः । ओं खड्ग इहागच्छ, खड्गाय नमः ओं वज्र इहागच्छ,



महासिंहः प्रकीर्तितः ॥ इति ध्यात्वा–मनोजूतिरिति मन्त्रेण प्राणप्रतिष्ठां विधाय—ॐ ह्राँ ह्रीँ वज्रनखदंष्ट्रायुध महासिंहासन इहागच्छ इह तिष्ठेत्यावाह्य, ॐ वज्रनखाय दंष्ट्रायुधाय महासिंहासनाय नमः । इति पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिं दद्यादनेन—ॐ नमस्ते सर्वतोभद्र शिवो भव महीपते । त्रैलोक्यस्य तु सर्वस्य सिंहासन नमोऽस्तु ते ॥ ॐ आसनं चासि दुर्गाया नानालङ्कारभूषितम् । मेरुसिंहप्रतीकाश सिंहासन नमोस्तु ते ॥ इति प्रणमेत् । ततो महिषासुरं ध्यायेत्–ॐ महिषस्त्वं महावीर शिवरूप सदाशिव । अतस्त्वां पूजयिष्यामि क्षमस्व महिषासुर ॥ इति ध्यात्वा मनोजूतिरित्यनेन प्राणप्रतिष्ठां विधाय–ॐ ह्रीँ ह्रीँ हूँ महिषासुर इहागच्छ इह तिष्ठेत्यावाह्य, ॐ महिषासुराय नमः । इत्यनेन पञ्चोपचारैः सम्पूज्य –ॐ महिषस्त्वं महावीर इन्द्रादिदेवमर्दक । देव्यस्त्रताडितो भूत्वा गतः स्वर्गं नमोऽस्तु ते । इति प्रणमेत् । ततो मूषिकं मयूरं चावाह्य प्राणप्रतिष्ठां विधाय पञ्चोपचारैः पूजयेत् । ततो द्वितीयोक्तक्रमेण रेमन्तम्, उच्चैःश्रवसं तुरगं च पूजयेत् । ततो नवभैरवांश्च पूजयेत् । तद्यथा—

वज्राय नमः । ओं अङ्कुश इहागच्छ, अङ्कुशाय नमः । ओं शङ्ख इहागच्छ, शङ्खाय नमः । ओं शर इहागच्छ, शराय नमः । ओं छुरिके इहागच्छ, छुरिकाय नमः । ओं कट्टार इहागच्छ, कट्टाराय नमः । ओं कुन्त इहागच्छ, कुन्ताय नमः । ओं वर्मन इहागच्छ, वर्मणे नमः । ओं परशो इहागच्छ, परशवे नमः । इत्यनेन प्रत्येकं पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिमादाय—ओं परशो त्वमतितीक्ष्णोऽसि सर्ववैरिविमर्दन । देव्योहस्तगतश्चासि सदा तुभ्यं नमो नमः ॥ यानि यानीह मुख्यानि प्रसिद्धान्यायुधानि च । क्षयकारीणि शत्रूणां विख्यातानि जगत्त्रये ॥ यानि यान्यम्बिका धत्ते करेषु स्वेषु सर्वदा । भुशुण्डीपाशपरिघभिन्दिपालशिलागुडाः ॥ ऋष्टितोमरकुन्ताश्च पट्टिशो मुशलस्तथा । गदाशतघ्नीकुणपच्छुरिकाकर्तरीमुखाः ॥ सर्वास्तान् पूजयाम्यद्य सप्तम्यां च विशेषतः । सर्वे रक्षन्तु मां नित्यं सर्वसिद्धिं ददत्वपि ॥ इति पुष्पाञ्जलिं दत्वा ओं छत्राय नमः, चामराय नमः, इत्यनेन छत्रचामरौ च पूजयेत् ।

पुष्पाञ्जलिमादाय, देव्या अग्रे—ॐ भैरवं परमं देवं सर्वकामप्रसाधकम्। पूजयाम्यग्रतो देव्याः सर्वाभीष्टफलप्रदम्। ॐ भीषणास्यं त्रिनयनमर्धचन्द्रविभूषितम्। स्फटिकाभं कङ्कणादिभूषाशतसमावृतम्॥ अष्टवर्षवयस्कं च कुण्डलोल्लसितं भजे। धारयन्तं दण्डशूले भैरव्यादिसमायुतम्॥ इति ध्यात्वा १–ॐ ऐं ह्रीं अं असिताङ्गभैरवा इहागच्छ इह तिष्ठेत्यावाह्य, असिताङ्गभैरवाय नमः। इति पञ्चोपचारैः पूजयेत्। एवम् २–ॐ ऐं ह्रीं इं रुरुदभैरवाय नमः। ३–ॐ ऐं ह्रीं उं चण्डभैरवाय नमः। ४–ॐ ऐं ह्रीं ऋं क्रोधभैरवाय नमः। ५–ॐ ऐं ह्रीं लृं उन्मत्तभैरवाय नमः। ६–ॐ ऐं ह्रीं ऐं भयङ्करभैरवाय नमः। ७–ॐ ऐं ह्रीं ऊं भीषणभैरवाय नमः। ८–ॐ ऐं ह्रीं अं संहारभैरवाय नमः। ९–ॐ ऐं ह्रीं कं कपालिभैरवाय नमः। इति प्रथमान्तपदेनावाह्य चतुर्थ्यन्तपदेन सर्वान् पूजयेत्। ततः पूर्ववत् कलशेष्वावाहितदेवान् पञ्चोपचारैः सम्पूज्य प्रार्थयेत्—ॐ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते॥ कुङ्कुमेन सदालब्धे चन्दनेन विलेपिते। बिल्वपत्रकृपापाणे दुर्गेऽहं शरणं गतः॥ ततः ॐ सर्वमङ्गलमाङ्गल्येत्यादि, ॐ रूपं देहि जयं देहीत्यादि च पठित्वा नमस्कुर्यात्। ततो वक्ष्यमाणविधिना बलिदानं कुमारीपूजनं च कृत्वा त्रिः प्रदक्षिणीकृत्य यथालाभं तोरणादीनि देव्या गृहे संस्थाप्य नृत्यगीतवाद्यादिभिरुत्सवं कारयेत्।

## अथ महासप्तम्यां सायंकृत्यम्

सायंकाले सूर्यायाऽर्धं दत्त्वा देवीं पञ्चोपचारैः सम्पूज्य नानास्तोत्रादिना पुष्पाञ्जलिं दत्त्वा नीराजनं कुर्यात्—ॐ मङ्गले कालिके दुर्गे महिषासुरमर्दिनि। इदं नीराजनं देवि गृहाण सुरसुन्दरि॥ ॐ समस्तयोगिनीचक्रे परिवारगणावृते। आरार्तिकमिदं दुर्गे कृपया प्रतिगृह्यताम्॥ इदं नीराजनम् ॐ साङ्गसायुधसवाहनसपरिवारायै श्रीदुर्गादेव्यै





नमः। ततः कर्पूरनीराजनं दद्याद्—ओं त्वं चन्द्रसूर्यज्योतींषि विद्युदग्न्योस्तथैव च। त्वमेव जगतां ज्योतिर्दीपोऽयं प्रतिगृह्यताम्।

इति सप्तमी (१) कृत्यम्।

## अथ छागबलिदानविधिः

स्ववामे स्नातं(२) छागं संस्थाप्य रक्तमाल्येन पञ्चडोरकेण वा वेष्टयित्वा 'ओं छागाय नमः' इति पञ्चोपचारैः

(१) सति सम्भवे सप्तम्यां मध्यरात्रौ श्मशाने बिल्वमूले प्रान्तरे वा भक्ष्यवस्तूनि गृहीत्वा शिवाभ्यो बलिं दद्यात्। अथ शिवाबलिदानविधिः—ॐ कालि कालि इत्यनेन शिवा आहूय पात्रे अन्नादिकं परिविष्य कुशत्रयादिकमादाय—ॐ ह्रीं एष बलिः शिवाभ्यो नमः। इत्युत्सृज्य—गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि। शुभाशुभं फलं ब्रूहि गृह्ण देवि बलिं तव॥ अथावशिष्टान्नव्यञ्जनादिभिः भैरवादिभ्यो बलिं दद्यात्। तद्यथा—एष बलिः, ॐ संहारभैरवाय नमः। बटुकेभ्यो नमः। विनायकेभ्यो नमः। मातृभ्यो नमः। क्षेत्रपालेभ्यो नमः। योगिनीभ्यो नमः। डाकिनीभ्यो नमः। शिवदूतीभ्यो नमः। इति यथाक्रमेण बलिं दत्त्वा तस्मात्स्थानात् किञ्चिदपसृत्य तासु भक्षयन्तीषु निश्चेष्टं देवीधिया प्रणम्य स्तुतिं कुर्यात्—शिवारूपधरे देवि गुह्यकाले नमोऽस्तु ते। उल्कामुखि ललजिह्वे घोररावे शृगालिनि॥ श्मशानवासिनि प्रेत-शवमांसप्रियेऽनघे। अरण्यचारिण्यनघे शिवे जम्बूकरूपिणि॥ नमोऽस्तु ते महामाये जगतारिणि कालिके। मातङ्गि कुक्कुटे रौद्रि महाकालि नमोऽस्तु ते॥ इति स्तुत्वा शिवास्वपसृतासु सतीषु तत्र गत्वा फलं परीक्षेत्। निःशेषं भक्षिते सम्यक् फलम्, अर्धभक्षिते मध्यमम्, अभक्षिते तु निष्फलमिति ज्ञेयम्। तत उच्छिष्टमन्नादिभाजनं च भूमौ निखनेत्। तथाहि—

यदि काकाः खराः श्वानो ये चान्ये पापजातयः। भक्षयन्ति तदुच्छिष्टं तदा विघ्नं प्रजायते॥ इति।

(२) देवीपुराणे—बलिं च ये प्रयच्छन्ति सर्वभूतविनाशनम्। तेषां तु तुष्यते देवी यावत्कल्पन्तु शाङ्करम्॥ नवधा पशुघातं च महिषाजविघातनम्॥ इत्यादि।

3

सम्पूज्य सचन्दनपुष्पाक्षतान्यादाय—ओमद्येत्यादि (महासप्तम्या, महाष्टम्यां, महानवम्यां वा तिथौ) श्रीदुर्गापूजन दर्शन-तर्पणजनितपूर्वपूर्वाधिकरणपुण्याधिकप्राप्तिकामोऽमुं छागं वह्निदैवतं भगवत्याः श्रीदुर्गादेव्याः प्रीतये घातयितुमहमुत्सृज्ये ॥ इत्युत्सृज्य तद्दक्षिणकर्णे—ओं पशुपाशाय विद्महे शिरश्छेदाय धीमहि तन्नश्छागः प्रचोदयात् । इति पशु-गायत्रीं जपित्वा—ओं यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा । अतस्त्वां घायताम्यद्य तस्माद्यज्ञे वधो भव ॥ ततः खड्गाय नमः । इति पञ्चोपचारैः सम्पूज्य खड्गं प्रणमेदनेन—ओं असिर्विशसिनः खड्गस्तीक्ष्णधारो दुरासदः ॥ श्रीगर्भो विजयश्चैव धर्माधार नमोस्तु ते । खड्गायासुरनाशाय शक्तिकार्याय तत्पर । पशुश्छेद्यस्त्वया शीघ्रं खड्गनाथ नमोऽस्तु ते ॥ ततः पशोर्ग्रीवायां खड्गस्पर्शं कारयेत् पठेच्च—ॐ यज्ञार्थे पशवः सृष्टा यज्ञार्थे पशुघातनम् । यज्ञस्य मारणे त्वं हि ध्रुवं गन्ता त्रिविष्टपम् ॥ खड्गघातमहद्दुःखं विनिर्जित्य पशूत्तम । देवीवरप्रसादेन मामात्मनञ्च तारय ॥ ततो बन्धनमोचनमन्त्रं पठेत्—ॐ रक्षार्थं बन्धनस्थोऽसि मुक्तये मोचितो मया । देव्याः प्रीतिं समुत्पाद्य स्वर्गं गच्छ पशूत्तम । इदं देहं परित्यज्य भूत्वा दैववपुर्धरः । मोदस्व प्रमथैः सार्धं यावदिन्द्राश्चतुर्दश ॥ ततः ॐ हें इति मन्त्रेण पशुं छेदयेत् । ततः ॐ ऐं ह्रीं कौशिकि समांसरुधिरेणाप्यायताम् । इति मांसरुधिरं दद्यात् । ततः छागमस्तकं सदीपं कृत्वा—ॐ एष सप्रदीपच्छागपशुशीर्षबलिः ह्रीं दुर्गायै नमः । इत्युत्सृज्य प्रार्थयेत्—ॐ घोरदंष्ट्रे करालास्ये मत्स्यमांसबलिप्रिये । बलिं गृह्ण महादेवि पशुरक्तं समांसकम् ॥ ॐ आहवे रुधिराकांक्षि वर्ति गृह्ण प्रसीद मे । त्रिनेत्रे विकरालास्ये मुण्डमालाविभूषिते ॥ सर्वासुरकृतान्ते त्वं खड्गखट्वाङ्गधारिणि । महिषघ्नि महामाये दैत्यदर्पनिषूदिनि । छागलेन बलिं दद्मि गृहाण हरवल्लभे ॥ तत आचारात् खड्गशोणितबिन्दुं ललाटे धारयेत् पठेच्च—ॐ यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा । स स मे वश्यतां यातु यदि शत्रुसमो भवेत् ॥ ततश्छाग-बलिदानप्रतिष्ठार्थं दक्षिणां कुर्यात्—



ॐअद्येत्यादि अमुकतिथौ कृतैतत्साङ्गसायुधसवाहनसपरिवारश्रीभगवत्याः दुर्गादेव्याः प्रीतिकामश्छागबलिदान-प्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । इति छागबलिदानविधिः ।

## अथ कुमारीपूजाविधिः

कुशत्रयतिलजलान्यादाय—ओमद्येत्यादि ( महासप्तम्यां, महाष्टम्यां, महानवम्यां वा तिथौ ) देवीप्रसादविवि-धमनोभीष्टकामावाप्तिराज्यकरणतदुत्तरदेवीलोकगमनकामः एताः कुमारीरहं(१) पूजयिष्ये ॥ इति सङ्कल्प्य कुमारीणां चरणप्रक्षालनं विधाय गोमयोपलिप्तभूभागे रम्ये शुभासनेषु ब्राह्मणकुमारीः प्राङ्मुखीरुपवेश्य, एतानि पाद्यादीनि ॐ ह्रीं कुमारीभ्यो नमः ( एकत्वे तु कुमार्यै नमः ) इत्यनेन पञ्चोपचारैः सम्पूज्य वासोमाल्यादिविभूषणैः सविधि समभ्यर्च्य—ॐ इदं नानाविधान्नभोजनीयं तुभ्यमहं निवेदयामि । इति निवेद्य शनैः शनैर्यथासुखं भोजयेत् ।

---

( १ ) कुमारीपूजने विशेषमाह वाडवानलीये—उत्तमा सा परिज्ञेया सप्ताष्टनवहायना । मध्यमा पञ्चवर्षी च षडब्दा दशहायना ॥ एकद्वित्रिचतुर्वर्षी रुद्राब्दाख्या वरा स्मृता । इति । महाथर्वणसंहितायाम्—ततः कुमारीपूजनं कुर्यात् साधकसत्तमः । यस्मिन् कृते विधिवत् कर्मणः साङ्गता भवेत् ॥ अकृते चाङ्गहानिः स्याद् विशेषाच्छरदर्चने ॥ न तथा तुष्यति शिवा बलिहोमस्तुतीरणैः ॥ कुमारीपूजने चात्र यथा सद्यः प्रसीदति ॥ न केवलं पूजयेत्तां भोजयेच्चापि यत्नतः ॥ इत्यादि । यामले—कुमारी पूजिता हन्ति कलुषं पूर्वसञ्चितम् । कुमारिका विजानीयात् साक्षात् प्रकृतिरूपिणीम् ॥ वसन्ति सततं देहे कुमार्या योगिनीगणाः । स सर्वसिद्धिमाप्नोति यः कुमारीं समर्चयेत् ॥ कुमारीपूजनं भगवत्या शरत्पूजनकर्मणि । बलिहोमादयश्चास्य कलां नार्हन्ति षोडशीम् ॥ पुनश्च तत्रैव —भोजिता चेत् कुमारी स्याद् भोजितम् भुवनत्रयम् । नवरात्रे समायाते नवम्यन्तं निशातधीः । नानोपहारैरभ्यर्च्य कुमारीं वृद्धिपूर्वकम् । वृद्धिक्रमेण प्रजयेद्वांछितां सिद्धिमाप्नुयात् ॥ कुमारीं न स्पृशेत् भक्त्या भावयुक्तेन चेतसा । अन्यथा मृत्युमाप्नोति नो चेद् देवीं पराङ्मुखो ॥ इति ।

अपेक्षिताद्यपानादिकं दत्त्वा तासामाचान्तानां करेष्वक्षतं दत्त्वा क्षमध्वमित्युक्त्वा ताभ्योऽक्षतान् शिरसा प्रतिगृह्य, कुमारीध्यानं कुर्यात् । तद्यथा--ॐ प्रसन्नवदनाम्भोजां प्रोद्यद्बालार्कसुप्रभाम् । रक्ताम्बरां रक्तमाल्यां नानालङ्कारभूषिताम् ॥ स्मितां दिव्यकन्याभिः क्रीडारसपरायणाम् । ध्यायेत् कुमारिकां बालां स्वभक्ताभीष्टसिद्धिदाम् ॥ ततो दक्षिणां दद्यात् ।

इति कुमारीपूजाविधिः ।

## अथ महाष्टमीकृत्यम्

कृत्यनित्यक्रियो यजमानः पूजोपकरणमासाद्य शुद्धासने प्राङ्मुख उपविश्य सङ्कल्पं कुर्यात्--ओमद्याश्विने मासि शुक्ले पक्षे महाष्टम्यां तिथौ अमुकगोत्रस्य श्री अमुकशर्मणः (१) सपरिवारस्योपस्थितशरीराविरोधेन महाभयाभावपूर्वकश्रीदुर्गाप्रीतिकामः साङ्गसायुधसवाहनसपरिवारभगवत्याः श्रीदुर्गादेव्याः पूजनमहं करिष्ये ॥ इति सङ्कल्प्य--ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोस्तु ते ॥ इत्यादिना प्राणायामं विधाय । ध्यायेत्--ॐ जटाजूटसमायुक्तामर्धेन्दुकृतशेखराम् । लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥ अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् । नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ॥ सुचारुवदनां तद्वत् पीनोन्नतपयोधराम् । त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥ कपालं खेटकं घण्टां दर्पणं तर्जनीं धनुः । ध्वजं डमरुकं पाशं वामहस्तेषु बिभ्रतीम् । शक्तिं च मुद्गरं शूलं खड्गं वज्राङ्कुशं तथा । शंखं चक्रं शरं चैव दक्षिणेषु च बिभ्रतीम् ॥ अधस्तान्महिषं तद्वत् विशिरस्कं प्रदर्शयेत् । शिरश्छेदोद्भवं तद्वद् दानवं खड्गपाणिनम् ॥ हृदि शूलेन

(१) ग्रामपूजायां तु--'अमुकगोत्रस्यामुकशर्मणः' इत्यस्य स्थाने--'नानागोत्राणां सकलजनानामेतद्ग्रामवासिनामेतत्पूजोपकारकाणामन्यद्ग्रामवासिनाम्' इति योज्यम् ।



निर्भिन्नं निर्गतं तु विभूषितम् । रक्तरक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम् ॥ वेष्टितं नागपाशेन भ्रुकुटीकुटिलाननम् । सपाशवामहस्ते धृतकेशञ्च दुर्गया ॥ पमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् । देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ॥ किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि । स्तूयमानं च तद्रूपममरैः सन्निवेशयेत् ॥ उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका । चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥ आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् । चिन्तयेत् सततं दुर्गां धर्मकामार्थमोक्षदाम् ॥ इदं ध्यानपुष्पं साङ्गसायुधसवाहनसपरिवार श्रीभगवत्यै दुर्गादेव्यै नमः । ततः पुष्पाक्षतमादाय--एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा । आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ॥ अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु । रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोस्तु ते ॥ ॐ भगवति दुर्गे इहागच्छ इह तिष्ठ इह सन्निधेहि इह स्थिता भव इह सुप्रसन्ना भव इत्यावाहनादि विधाय पुष्पचन्दनयुतं पाद्योदकमादाय--ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोस्तु ते ॥ 'ॐ दुर्गे दुर्गे रक्षिणि स्वाहा' इति मन्त्रमुच्चार्य्य इदं पाद्यम् ओं साङ्गसायुधसवाहनसपरिवारश्रीदुर्गादेव्यै नमः । इति पाद्योदकं दत्त्वा एकस्मिन् पात्रे कुङ्कुम-बिल्वपत्राक्षत-पुष्प-दधि-दूर्वा-कुशाग्रत्रय-तिल-जल-यवैरर्घ्यं सम्पाद्य--'ॐ दुर्गे दुर्गे रक्षिण स्वाहा'--इति मूलमन्त्रमुच्चार्य्य एषोऽर्घः ॐ साङ्ग० दुर्गादेव्यै नमः । ततः ओं दुर्गे दुर्गे रक्षिणि स्वाहा--इति मूलमन्त्रमुच्चार्य्य इदमाचमनीयम् ओं साङ्ग० दुर्गादेव्यै नमः । मूलमन्त्रमुच्चार्य्य--इदं स्नानीयम् ओं साङ्गसायुधसवाहनसपरिवारश्रीदुर्गादेव्यै नमः । ततः एवं क्रमेण मूलमन्त्रमुच्चार्य्योच्चार्य्य--इदं मधुपर्कम्० । इदं पुनराचमनीयम्० । इदं चन्दनम्० । इदं सिन्दूरम्० । इदं कुङ्कुमाद्यनुलेपनम्० । एष पुष्पाञ्जलिः० । इति प्रत्येकं समर्पयेत् । ततो बिल्वपत्राञ्जलिमादाय--ओं अमृतोद्भवं श्रीवृक्षं शङ्करस्य सदा प्रियम् । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥ मूलमन्त्रमुच्चार्य्य एतानि बिल्वपत्राणि ओं साङ्ग०

श्रीदुर्गायै नमः। ततो द्रोणपुष्पमादय—ओं ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम्। तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये। मूलमन्त्रमुच्चार्य एतानि द्रोणपुष्पाणि साङ्ग० श्रीदुर्गायै नमः। ततो जाती–चम्पक–पद्म–कुमुद–मल्लिकाकरवीर–जपादिकुसुमैर्यथालाभमर्चयेत्। ततः अगुरु–गुग्गुलुप्रभृति–धूपद्रव्यपात्रस्थज्वलिताङ्गारे निक्षिप्य मूलमन्त्रमुच्चार्य एष धूपः ॐ साङ्ग० श्रीदुर्गायै नमः। ततो मूलमन्त्रमुच्चार्य्य एष दीपः०। एतानि नानाविधनैवेद्यानि०। एतानि मुक्तारत्नानि०। इदं छत्रं वनस्पतिदैवतम्०। इमे उपानहावुत्तानाङ्गिरोदैवते०। एतानि वासांसि बृहस्पतिदैवतानि०। इति मूलमन्त्रमुच्चार्य्य प्रत्येकं समर्प्य मूलपूजां विधाय विशेषतो देव्या आवरणपूजां पीठपूजां च कुर्यात्। तद्यथा—गन्धपुष्पाक्षतैरष्टदलकमलेषु–अग्निकोणे ॐ हृदयाय नमः। नैर्ऋत्यकोणे–ॐ दुर्गे शिरसे स्वाहा। वायव्यकोणे—ॐ दुर्गे शिखायै वषट्। ईशानकोणे—ॐ रक्षिणि कवचाय हुँ। मध्ये—ॐ स्वाहा नेत्राभ्यां वौषट्। सर्वदिक्षु—ॐदुर्गे दुर्गे रक्षिणि स्वाहा अस्त्राय फट्। ततः पुष्पाक्षतमादाय सम्बोधनपदेनावाह्य यतुर्थ्यन्तपदेन देव्याः शक्तीः पूजयेत्। तद्यथा—ॐ ह्रीँ मङ्गलायै नमः। ॐ ह्रीँ मङ्गलायै नमः। ॐ ह्रीं काल्यै नमः। ॐ ह्रीँ भद्रकाल्यै नमः। ॐ ह्रीँ कपालिन्यै नमः। ॐ ह्रीँ शिवायै नमः। ॐ ह्रीँ धात्र्यै नमः। ॐ ह्रीँ स्वधायै नमः॥ ततः पूजितदेवताः यथासामर्थ्यमभ्यर्च्य कृताञ्जलिपुटो भूत्वा भविष्यपुराणोक्तं स्तोत्रं पठेत्—ॐ दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम्। सर्वलोकप्रणेत्रीश्च प्रणमामि सदा शिवाम्॥ मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम्। विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम्॥ सर्वदेवमयीं देवीं सर्वरोगभयापहाम्। ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम्॥ विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम्। योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम्॥ ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम्। प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम्॥ य इदं पठति स्तोत्रं श्रृणुयाद्वापि यो नरः। स मुक्तः सर्वपापैस्तु मोदते दुर्गया सह॥ ततो वरप्रार्थनम्—ॐ महिषघ्नि



महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यविजयं देहि देवि नमोऽस्तु ते॥ भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि। देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। उमे ब्रह्माणि कौमारि विश्वरूपे प्रसीद मे॥ ॐ रूपं देहि जयन्देहि यशो भगवति देहि मे। पुत्रान्देहि धनन्देहि सर्वान् कामान् प्रदेहि मे॥ ॐ चन्दनेन समालब्धे कुंकुमेन विलेपिते। बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः॥ इति सम्प्रार्थ्य पुष्पाञ्जलित्रयं दत्त्वा महासप्तम्युक्तप्रकारेण बलिदानं कुमारीपूजनं च कुर्यात्। यथाशक्ति सुवासिनीः ब्राह्मणांश्च भोजयेत्। इति दिवाकृत्यम्।

## अथ महाष्टम्यां निशापूजा

तत्र कृतनित्यक्रियो यजमानः सकलपूजोपकरणमासाद्याचम्य कुशत्रयतिलजलान्यादाय—ॐ अस्यां रात्रौ 'अमुकगोत्रस्यामुकशर्मणः'(१) सपरिवारस्योपस्थितशरीराविरोधेन दुर्भिक्षदुःखनिवृत्तिदीर्घायुष्ट्व–बलपुष्टिनैरुज्यध्वजमालाकुलविमानवरारोहणब्रह्मलोकगमनपूर्वकहर्षविजयकामः सोपवासः साङ्गसायुधसवाहनसपरिवारश्रीदुर्गादेव्याः पूजनमहं करिष्ये॥ इति सङ्कल्प्य पूजामारभेत्। तत्र प्रथमं श्रीदुर्गादेव्याः स्मरणादि (२) सङ्कल्पं कुर्यात्–कुशादिक-

(१) ग्रामपूजायां तु—ओमद्येत्यादि नानागोत्राणां सकलजनानामेतद्ग्रामवासिनामेतत्पूजोपकारकाणामन्यद्ग्रामवासिनां च दुर्भिक्षदुःखनिवृत्तिपूर्वकाऽतिशयितशुभमतिप्राप्तिदीर्घायुष्ट्वबलपुष्टिपरमपदप्राप्तिध्वजमालाकुलविमानवरारोहणपूर्वकब्रह्मलोकगमनपूर्वकशाश्वतसमावच्छिन्नहर्षविजयकामः सोपवासो दुर्गादेव्याः पूजनमहं करिष्ये। इति संकल्प्य पूजामारभेत्।

(२) शक्तिसङ्गमतन्त्रे—अष्टम्यामर्धरात्रे तु यत्किञ्चित् कुरुते नरः। तत्तदक्षयमायाति नवदुर्गाप्रयोगतः॥
भविष्ये—तत्र देशे न दुर्भिक्षं न च दुःखं प्रवर्तते। नाकाले म्रियते कश्चित् पूज्यते यत्र चण्डिका॥

मादाय—ॐ अस्यां महाष्टम्यां रात्रौ सर्वविधमहाभयाभावकामः श्रीदुर्गादेव्याः स्मरणं, (१) दुर्गालोकमहत्वकामो श्रीदुर्गानामकीर्तनं, श्रीदुर्गाभिवन्दनजन्यपुण्याधिकपुण्यलाभकामः श्रीदुर्गायाः स्पर्शनं, परमपदप्राप्तिकामः श्रीदुर्गायाः दर्शनमहं करिष्ये ॥ इति सङ्कल्प्य—ॐ चन्द्रमौलिपदप्राप्त्यै महाष्टम्यां महेश्वरि। अद्याहं स्मरणं दुर्गे करिष्ये तव प्रीतये ॥ ॐ सर्वानिष्टविनाशार्थमभयार्थं सुरेश्वरि। भवबन्धविमोक्षार्थं ज्ञानं प्राप्तं महेश्वरि ॥ अद्याहं च महाष्टम्यां करिष्ये स्मरणं तव ॥ ततः कीर्तनम्—ॐ नामानुकीर्तनं तेऽद्य महाष्टम्यां शिवप्रिये। कलिकल्मषनाशार्थं करिष्ये धनवृद्धये ॥ अत्युत्कृष्टपदं प्राप्तुं दुःखात्तर्तुं पुनः पुनः। अद्य दुर्गे महाष्टम्यां करिष्ये कीर्तनं तव ॥ ततो दर्शनम्—ॐ अद्याऽहं ते महाष्टम्यां पुण्यप्राप्तिसुखाप्तये। दुर्गे देवि महामाये करिष्ये दर्शनं तव ॥ ॐ महाश्रियं महाज्ञानं महैश्वर्यं महाबलम्। आयुर्बलं यशो वित्तं विद्यां विज्ञानमेव च ॥ प्राप्तुकामोऽद्य सर्वज्ञे करिष्ये तव दर्शनम् ॥ ओ आनन्दार्थं महादुर्गे गोदानफलप्राप्तये। वृद्धयर्थं चैव वंशानां करिष्ये वन्दनं तव ॥ ततः—ओमद्याऽहं महाष्टम्यां शत्रुनाशाय चण्डिके। सुश्रीवृद्धयर्थकामश्च मनोवाञ्छितकामुखः। नानाशुभफप्राप्त्यै सर्ववाधाक्षयाय च। अद्याऽहं ते महाष्टम्यां करिष्ये पूजनं तव ॥ इति पठित्वा पूजामारभेत्। तत्र क्रमः—'जयन्ती मङ्गला काली' इति मन्त्रेण प्रणम्य—'ॐ दुर्गे दुर्गे रक्षिणि स्वाहा' इति मूलमन्त्रेण प्रातरुक्तपूजाकल्पेन—ओं साङ्गसायुधसवाहनसपरिवारश्रीभगत्यै दुर्गादेव्यै नमः। इत्यर्घादिना पूजयेत्।

अथावरणपूजा—ततः पुष्पाक्षतमादाय प्रणवपूर्वकं 'ह्रीँ' बीजं दत्त्वा सम्बोधनपदेनावाह्य 'ह्रीँ' बीजसहितं चतुर्थ्यन्तपदेन पाद्यादिभिः पञ्चोपचारैः जयन्त्यादीनां प्रत्येकं पूजयेत्। तद्यथा—प्रथमं देव्याः दक्षिणपार्श्वे—१. ॐ ह्रीँ जयन्ति इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ॐ ह्रीँ जयन्त्यै नमः। इति पञ्चोपचारैः सम्पू-

(१) भविष्ये—स्मरणं कीर्तनं चैव दर्शनं स्पर्शनं तथा। पूजनं चेति पञ्चाङ्गं कर्म प्रोक्तं सदा बुधैः ॥



जयेत्। (एवं सर्वत्र ओं ह्रीँ बीजं दत्वा)—२. मङ्गले इहागच्छ०, मङ्गलायै नमः। ३. कालि इहागच्छ०, काल्यै नमः। ४. भद्रकालि इहागच्छ०, भद्रकाल्यै नमः। ५. कपालिनि इहागच्छ०, कपालिन्यै नमः। ६. दुर्गे इहागच्छ०, दुर्गायै नमः। ७. क्षमे इहागच्छ०, क्षमायै नमः। ८. शिवे इहागच्छ०, शिवायै नमः। ९. धात्रि इहागच्छ, धात्र्यै नमः। १०. स्वधे इहागच्छ०, स्वधायै नमः ११. स्वाहे इहागच्छ०, स्वाहायै नमः। ततो देव्याः पृष्ठपार्श्वे—१२. ओं ह्रीं उग्रचण्डे इदागच्छ०, ओं ह्रीँ उग्रचण्डायै नमः। (एवं ओं ह्री सर्वत्र दत्वा)—१३. प्रचण्डे इहागच्छ०, प्रचण्डायै नमः। १४. चण्डोग्रे इहागच्छ०, चण्डोग्रायै नमः। १५. चण्डनायिके इहागच्छ०, चण्डनायिकायै नमः। १६. चण्डे इहागच्छ० चण्डायै ममः। १७. चण्डवति इहागच्छ०, चण्डवत्यै नमः। १८. रुद्रचण्डे इहागच्छ०, रुद्रचण्डायै नमः। १९. चण्डरूपे इहागच्छ०, चण्डरूपायै नमः। २०. चण्डिके इहागच्छ०, चण्डिकायै नमः। ततो देव्याः वामपार्श्वे—२१. ओ ह्रीँ उग्रदंष्ट्रे इहागच्छ०, ओ ह्रीँ उग्रदंष्ट्रायै नमः। एवं (ओं ह्रीँ सर्वत्र दत्वा)—२२. महादंष्ट्रे इहागच्छ०, महादंष्ट्रायै नमः। २३. शुभ्रदंष्ट्रे इहागच्छ०, शुभ्रदंष्ट्रायै नमः। २४. कालिनि इहागच्छ०, कालिन्यै नमः। २५. भीमनेत्रे इहागच्छ०, भीमनेत्रायै नमः २६. विशालाक्षि इहागच्छ०, विशालाक्ष्यै नमः। २७. मंगले इहागच्छ०, मङ्गलायै नमः। २८. विजये इहागच्छ०, विजयायै नमः। २९. जये इहागच्छ०, जयायै नमः। ततो देव्याः पुरतः—३०. ओं ह्रीँ नन्दिनि इहागच्छ ओ ह्रीँ नन्दिन्यै नमः। (एवं ओं ह्रीँ सर्वत्र दत्वा)—३१ भद्रे इहागच्छ०, भद्रायै नमः। ३२. लक्ष्मि इहागच्छ०, लक्ष्म्यै नमः ३३. कीर्ते इहागच्छ०, कीर्त्यै नमः। ३४. यशस्विनि इहागच्छ०, यशस्विन्यै नमः। ३५. कोटियोगिनि इहागच्छ०, कोटियोगिन्यै नमः। ३६. पुष्टे इहागच्छ, पुष्ट्यै नमः। ३७. मेधे इहागच्छ, मेधायै नमः। ३८. शिवे इहागच्छ०, शिवायै नमः। ३९. साध्वि इहागच्छ, साध्व्यै नमः। ४० यशे इहागच्छ०, यशायै नमः। ४१. शोभने इहागच्छ०, शोभनायै नमः। ४२. जये इहागच्छ० जयायै

नमः। ४३. धृते इहागच्छ० धृत्यै नमः। ४४. आनन्दे इहागच्छ०, आनन्दायै नमः। ४५. सुनन्दे इहागच्छ० सुनन्दायै नमः। ततो देव्याः समीपे 'ह्रीं' इति बीजरहितं देव्यः पूज्याः। तथाहि—१. विजये इहागच्छ इह तिष्ठेत्यावाह्य, ओं विजयायै नमः। इति पञ्चोपचारैः सम्पूज्य एवमेवान्या अपि पञ्चोपचारैः पूजयेत्। तद्यथा—२. मङ्गले इहागच्छ०, मङ्गलायै नमः। ३. भद्रे इहागच्छ०, भद्रायै नमः। ४. धृते इहागच्छ०, धृत्यै नमः। ५. शान्ते इहागच्छ०, शान्त्यै नमः। ६. ऋद्धे इहागच्छ०, ऋद्ध्यै नमः। ७. क्षमे इहागच्छ, क्षमायै नमः। ८. शिवे इहागच्छ०, शिवायै नमः। ९. सिद्धे इहा०, सिद्ध्यै नमः। १०. तुष्टे इहा०, तुष्ट्यै नमः। ११. पुष्टे इहा०, पुष्ट्यै नमः। १२. उमे इहा० उमायै नमः। १३. रते इहा० रत्यै नमः। १४. दीप्ते इहा० दीप्तायै नमः। १५. कान्ते इहा० कान्त्यै नमः। १६. यशे इहा० यशायै नमः। १७. लक्ष्मि इहा० लक्ष्म्यै नमः। १८. त्रिपुरे इहा०, त्रिपुरायै नमः। १९. ऋद्धे इहा०, ऋद्ध्यै नमः। २०. शक्ते इहा० शक्त्यै नमः। २१. जयावति इहा० जयावत्यै नमः। २२. ब्राह्मि इहा० ब्राह्म्यै नमः। २३. जयन्ति इहा० जयन्त्यै नमः। २४. अपराजिते इहा० अपराजितायै नमः। २५ अजिते इहा० अजितायै नमः। २६. मानसि इहा० मानस्यै नमः। २७. श्वेते इहा० श्वेतायै०। २८. दिते इहा० दित्यै०। २९. माये इहा० मायायै०। ३० महामाये इहा० महामायायै०। ३१. मोहिनि इहा० मोहिन्यै०। ३२. रतिलालसे इहा० रतिलालसायै० ३३. तारे इहा० तारायै०। ३४. विमने इहा० विमनायै०। ३५. गौरि इहा० गौर्यै०। ३६. कौशिकि इहा० कौशिक्यै०। ३७. मते इहा० मत्यै०। ३८. दुर्गे इहा० दुर्गायै०। ३९. क्रिये इहा० क्रियायै०। ४०. अरुन्धति इहा० अरुन्धत्यै०,। ४१. घण्टे इहा० घण्टायै०। ४२. कर्णे इहा० कर्णायै०। ४३. कपालिनि इहा० कपालिन्यै०। ४४. रौद्रि इहा० रौद्र्यै। ४५. कालि इहा० काल्यै०। ४६. मयूरि इहा० मयूर्यै०। ४७. त्रिनेत्रे इहा० त्रिनेत्रायै०। ४८. स्वरूपे इहा० स्वरूपायै। ४९. बहुरूपे इहा० बहुरूपायै०। ५०. रिपुहे इहा० रिपुहायै०। ५१. चर्चिके इहा० चर्चिकायै०। ५२. अम्बिके इहा० अम्बि-



कायै० ५३. सुरपूजिते इहा० सुरपूजितायै०। ५४. वैवस्वते इहा० वैवस्वतायै०। ५५. कौमारि इहा० कौमार्यै०। ५६, माहेश्वरि इहा० माहेश्वर्यै०। ५७. वैष्णवि इहा० वैष्णव्यै०। ५८. महालक्ष्मि इहा० महालक्ष्म्यै०। ५९. कार्तिकि इहा० कार्तिक्यै०। ६०. शिवदूति इहा० शिवदूत्यै०। ६१. वाराहि इहा० वाराह्यै०। ६२. चामुण्डे इहा० चामुण्डायै नमः।

ततो देव्याः प्रदक्षिणक्रमेण मातरः पूज्याः—६३. ओं ह्रीं ब्रह्माणि इहागच्छ इह तिष्ठेत्यावाह्य, ओं ह्रीं ब्रह्माण्यै नमः। इत्यनेन पञ्चोपचारैः पूजयेत्। एवम्—६४. माहेश्वरि इहागच्छ० माहेश्वर्यै नमः। ६५. कौमारि इहा० कौमार्यै नमः। ६६. वैष्णवि इहा० वैष्णव्यै नमः। ६७. वाराहि इहा० वाराह्यै नमः। ६८. इन्द्राणि इहा० इन्द्राण्यै नमः। ६९. चामुण्डे इहा० चामुण्डायै नमः। ७०. महालक्ष्मि इहा० महालक्ष्म्यै नमः। ७१. चण्डिके इहा० चण्डिकायै नमः।

ततो देव्याः पुरोभागे नवभैरवान् पूजयेत्। तद्यथा—१. ॐ भूर्भुवः स्वर्भगवन् भैरव इहागच्छ इह तिष्ठेत्यावाह्य, पुष्पाण्यादाय—ॐ भैरवं परमं देवं सर्वकामप्रसाधकम्। पूजयाम्यग्रतो देव्याः सर्वाभीष्टफलप्रदम्॥ इति पुष्पाञ्जलि दत्त्वा ओं भैरवाय नमः, इत्यनेन पञ्चोपचारैः पूजयेत्। एवम्—२. ॐ असिताङ्गभैरव इहा० असिताङ्गभैरवाय नमः। ३. कालभैरव इहा० कालभैरवाय नमः। ४. क्रोधभैरव इहा० क्रोधभैरवाय नमः। ५. उन्मत्तभैरव इहा० उन्मत्तभैरवाय नमः। ६. कपालिभैरव इहा० कपालिभैरवाय नमः। ७. भीषणभैरव इहा० भीषणभैरवाय नमः। ८. संसारभैरव इहा० संहारभैरवाय नमः। ९. बटुकभैरव इहा० बटुकभैरवाय नमः। ततः पुष्पाञ्जलि दत्त्वा प्रणमेत्—ओ भैरवं परमं देवं शत्रुक्षयकरं विभुम्। प्रणमामि सदोपास्यं वीरभावसमाश्रितम्॥

ततो द्वादश क्षेत्रपालान् यक्षान् पञ्चोपचारैः पूजयेत्। तद्यथा—१. ओं यक्षराज इहागच्छ इह तिष्ठेत्यावाह्य,

ॐ यक्षराजाय नमः इति सम्पूज्य २. ॐ हूँ क्षौं केतुकक्षेत्रपाल इहागच्छ इह तिष्ठेत्यावाह्य ॐ हूँ क्षौं केतुकक्षेत्रपालाय महाविभीषणाय स्वाहा नमः। ३. ॐ बलिभद्र इहा० बलिभद्राय नमः। ४. चित्रमुण्ड इहा० चित्रमुण्डाय नमः। ५. सेन्द्रयक्ष इहा० सेन्द्रयक्षाय नमः। ६. जम्भ इहा० जम्भाय नमः। ७. वेताल इहा० वेतालाय नमः। ८. भीषणक्षेत्रपाल इहा० भीषणक्षेत्रपालाय नमः। ९. एकपादयक्ष इहा० एकपादयक्षाय नमः। १०. अग्निजिह्वक्षेत्रपाल इहा० अग्निजिह्वक्षेत्रपालाय नमः। ११. कालक्षेत्रपाल इहा० कालक्षेत्रपालाय नमः। १२. जङ्गयक्ष इहा० जङ्गयक्षाय नमः।

ततो देव्या अङ्गानि पूजयेत्—ॐ कालि कालि हृदय इहागच्छ इह तिष्ठेत्यावाह्य ॐ कालि कालि हृदयाय नमः। एवं वक्ष्यमाणानां प्रत्येकं सम्बोधनपदेनावाह्य चतुर्थ्यन्तपदेन पाद्यादिभिः पूजयेत्। तद्यथा—ॐ कालि कालि वज्रिणि शिरसे नमः। ॐ कालि २ वज्रेश्वरि शिखायै नमः। ॐ कालि २ वज्रेश्वरि कवचाय नमः। ॐ कालि २ लोहदंष्ट्रायै स्वाहा नेत्रत्रयाय नमः। ॐ कालि २ लौहदण्डायै अस्त्राय नमः।

अथ देव्याः पञ्चवक्त्रपूजनम्। तत्र सम्बोधनपदेनावाह्य चतुर्थ्यन्तपदेन पाद्यादिभिः पूजयेत् तद्यथा—१. ॐ ईशानाय नमः, इति शिरसि। २. ॐ कालि कालि तत्पुरुषाय नमः, इति मुखे। ३. ॐ वज्रेश्वरि अघोराय नमः, इति हृदये। ४. ॐ लोहदंष्ट्रायै वामदेवाय नमः, इत्यधः। ५. ॐ स्वाहा सद्योजाताय नमः, इति सर्वाङ्गं पूजयेत्।

अथ देव्या अस्त्रपूजा (अत्रापि पूर्ववत् टिप्पण्योक्त्या सम्बोधनपदेनावाह्य चतुर्थ्यन्तपदेन पूजयेत्। ॐकारं सर्वत्र प्रयोज्यम्)। तद्यथा—ॐ कपालाय नमः। खेटकाय नमः। घण्टायै नमः। दर्पणाय नमः। तर्जन्यै नमः। धनुषे नमः। ध्वजाय नमः। डमरुकाय नमः। पाशाय नमः। दक्षिणहस्ताय नमः। शक्त्यै नमः। मुद्गराय नमः। शूलाय नमः। खड्गाय नमः। वज्राय नमः। अङ्कुशाय नमः। शंखाय नमः। चक्राय नमः। शराय नमः। सर्वेभ्यो



देव्यस्त्रेभ्यो नमः। ततः ओं यानि यानीह मुख्यानि प्रसिद्धान्यायुधानि च। क्षयकारीणि शत्रूणां विख्यातानि जगत्त्रये॥ सर्वास्तान् पूजयाम्यद्य महाष्टम्यां विशेषतः। सर्वे रक्षन्तु मां नित्यं सर्वसिद्धिं ददत्वपि॥ ओं देव्याः किरीटाद्यलङ्कारेभ्यो नमः। इति सम्पूज्य—ॐ वज्रनखदंष्ट्रायुधाय महासिंहासनाय हुं फट् स्वाहा, सिंहासनाय नमः। इति सिंहासनमपि सम्पूज्य महिषञ्च पूजयेत्।

ततश्चन्दनेन अष्टदलकमलमालिख्य पूर्वादिदलेषु क्रमेण—रुद्रचण्डां, प्रचण्डां, चण्डोग्रां, चण्डनायिकाम्, मध्ये—उग्रचण्डां च सम्बोधनपदेनावाह्य चतुर्थ्यन्तपदेन पञ्चोपचारैः पूजयेत्।

ततो महासप्तम्युक्तविधिना छागादिबलिं दद्यात्। ततो नैर्ऋत्ये त्रिकोणमण्डलं कृत्वा माषभक्तघृतपकान्नअपूपपूरिकापायसादिद्रव्यमेकत्रोपकृत्य बलिं दद्यात्। तद्यथा—ओमस्यां महाष्टम्यां रात्रौ लोकपालादिनवग्रहनक्षत्राऽसुरगणगन्धर्वयक्षराक्षसविद्याधरपन्नगगजेन्द्रपशुभूतपिशाचक्रव्यादमनुष्यगणयोगिनीगणडाकिनीगणाः इमं नानाद्रव्यबलिं गृह्णन्तु स्वाहा। इति प्रचुरं बलिं समुत्सृज्येत्। ततः—ओं शिवाः कङ्कालवेतालाः पूतनाजम्बुकादयः। ते सर्वे तृप्तिमायान्तु बलिदानेन तोषिताः॥ इति भूतबलिं दत्त्वा अञ्जलिं बद्ध्वा 'ॐ महिषघ्नि' इत्यादि (१६७ पृष्ठोक्त) नानास्तुतीर्यथाशक्ति पठेत्। ततो लक्ष्म्यादिपूजितदेवताः पूजयेत्। ततो नीराजनं कृत्वा महासप्तम्युक्तविधिना कुमारीः सम्पूज्य भोजयेत्। सति सम्भवे सधवास्त्रीः ब्राह्मणांश्च भोजयेत्। ततो नृत्यगीताद्युत्सवैः रात्रिशेषं (१) नयेत्।

इति महाष्टमीकृत्यम्

---

(१) कालिकापुराणे—पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत्। जागरं च स्वयं कुर्याद् बलिदानं महानिशि॥ अन्यच्च—दुर्गा सा पूजनीया च तद्दिने द्रोणपुष्पकैः। ततो खड्गं नमस्कृत्य शत्रूणां वधसिद्धये॥ इच्छेच्च विजयं राज्यं सुभिक्षं चात्मने नृपः। पुनः पुनः प्रणम्यार्यां संस्मरन् हृदये शिवाम्॥ सर्वं कुर्वेति कौरव्य अष्टम्यां जागरं निशि। नटनर्तकगीतैश्च कारयेच्च महोत्सवम्॥

## अथ महानवमीकृत्यम्

महानवम्यां त्रिशूलिनीपूजा। प्रातः कृतनित्यक्रियः पञ्चदेवतां विष्णुं च सम्पूज्य कुशत्रयतिलजलान्यादाय-ॐ अद्याश्विनशुक्लमहानवम्यां तिथौ (१) 'अमुकगोत्रस्याऽमुकशर्मणः' महापातकादिसकलपापक्षयपूर्वकदिव्याधिकरणकदेवतागणपरिवृतत्वसहस्राश्वमेधशतवाजपेययज्ञसमफलप्राप्तिपूर्वकशरीरारोग्यबलपुष्टिसुखसौमनस्यप्राप्तिकामनया त्रिशूलाकृतिदुर्गादेवीमहं पूजयिष्ये। इति सङ्कल्प्य सूपलिप्ते स्थण्डिले काष्ठादिमयं चण्डिकात्मकं त्रिशूलं निधाय तीर्थोदकेन स्नापयित्वा दुग्धदधिमधुघृतादिभिश्च स्नपयेत्। ततो वारिणा प्रक्षाल्य—ॐ मनोजूतिर्जुषतामाज्यस्येति मन्त्रेण प्राणप्रतिष्ठां विधाय ॐ भूर्भुवः स्वर्भगवति दुर्गे इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि ॐ भगवत्यै चण्डिकायै नमः। एवम् इदं कुंकुमागुरुकर्पुरचन्दनानुलेपनम्०। इदं सिन्दूरम्० इदमक्षतम्० एतानि करवीरजातीजपाकुसुमबिल्वपत्रपुष्पमालादीनि० एष सघृतगुग्गुलुधूपः० एष दीपः० एतानि नैवेद्यानि० इदमाचमनीयम्० इदं ताम्बूलम्० इदं वस्त्रं बृहस्पतिदैवतम्० एतानि हिरण्यरत्नभूषणसिन्दूरालक्तकपट्टसूत्रिकादीनि०। एष सितकुसुमाञ्जलिः ॐ चण्डिकायै नमः। इति सम्पूज्य प्रणम्य मणिकाञ्चनभूषितं त्रिशूलं अश्वे रथे वा समारोप्य समन्ताच्छत्रचामरादिशोभान्वितनानावाद्यवेदनिर्घोषैर्दुर्गादेव्याः पुरतः स्थापयेत्। ततः पुनरुक्तोपचारैः—ॐ ह्रीं चण्डिकायै नमः। इति सम्पूज्य प्रणम्य ॐ दुर्गां शिवामित्यादिभिः स्तुत्वा महीषघ्नीत्यादिन सम्प्रार्थ्य प्रणमेत्। ततः पूर्वस्थापितदुर्गादिदेवताः, कलशावाहितदेवताः, नव पत्रिकाश्च, अष्टमीवत्सकलोपचारैः

---

(१) ग्रामपूजायाम्—'अमुकगोत्रस्यामुकशर्मणः' इत्यस्य स्थाने नानागोत्राणां सकलजनानामेतद्ग्रामवासिनामेतत्पूजोपकारकाणामन्यद्ग्रामवासिनाम्' इति यथेप्सितं योज्यम्।



सम्पूज्य रेमन्तं च पूजयेत्। सति सम्भवे मातृचक्रं पूजयेत्। तद्यथा—रक्तचन्दनेनाष्टदलपद्ममालिख्य तन्मध्ये चण्डिकां सम्पूज्य प्राग्दले—ब्रह्माणीम्। आग्नेये—माहेश्वरीम्। दक्षिणे—कौमारीम्। नैर्ऋते—वैष्णवीम्। पश्चिमे-वाराहीम्। वायव्ये-नारसिंहीम्। उत्तरे--ऐन्द्रीम्। ईशाने—शिवदूतीम्। मध्ये—चामुण्डाञ्चावाह्य प्रणवादिनमोन्तचतुर्थ्यन्तेन पाद्यादिभिः पूजयेत्।

ततः महासप्तम्युक्तकुमारीपूजनविधिना कुमारिकाः संपूज्य वस्त्रभोजनदक्षिणादिना परितोषयेत्॥ ततो वक्ष्यमाणविधिना होमं कुर्यात्। ततः महासप्तम्युक्तप्रकारेण प्रचुरं छागबलिं दद्यात्। शक्तश्चेत् महिषबलिदानं च कुर्यात्॥

## अथ महिषबलिदानविधिः

तत्र बलिप्रदानस्थानं गत्वा पुष्पाञ्जलिमादाय पृथ्वीमावाहयेत्—ॐ आवाहयाम्यहं देवीं भूतधात्रीं सुलक्षणाम्। कामदां वैष्णवीमृद्धिं सिद्धिं सर्वत्र पूजिताम्॥ शस्याढ्यां सुरभिं देवीं धात्रीं सर्वजनस्य च। चलत्पङ्कजसंयुक्तामिहागच्छ वसुन्धरे॥ इत्यावाह्य—ॐ पद्मासनस्थां शशिमौलिरम्यां दूर्वादलश्यामतमाङ्गयष्टिम्। दैत्यारिपार्श्वे परिमर्दयन्तीं वसुन्धरां तां वरदां स्मरामि॥ महिषासुरयुद्धेषु सर्वदेवगणैः सह। कम्पिता क्षोभिता पृथ्वि भज तुष्टिं वधेऽस्य तु॥ खुराग्रक्षेपणात् क्षुण्णा पुरासीन्महिषस्य तु। इदानीं शोणितैस्तस्य स्निग्धा भव वसुन्धरे॥ इदं ध्यानपुष्पं ॐ पृथिव्यै नमः। ॐ सर्वसहायै नमः। ॐ वसुन्धरायै नमः। इति पञ्चोपचारैः पूजयेत्। ततः ॐ पशुपाशविनाशाय हेमकूटस्थिताय च। परावराय परमेष्ठिने हूँकाराय च मूर्तये॥ इति पठित्वा ॐ ह्रः अस्त्राय फट्॥ इति पठित्वा महिषस्य सर्वाङ्गानि अवलोकयेत्। ततः ॐ मेघाकारस्तम्भमध्ये महिषं बन्धय बन्धय हूँ फट् स्वाहा॥ इति पठित्वा स्तम्भे महिषं संयम्य हरिद्रारागरञ्जितजलपूर्णघटे नवदुर्गामावाह्य पञ्चोपचारैः पूजयेत्।

तद्यथा—१. ओं कौमार्यै नमः। २. ओं वैष्णव्यै नमः। ३. ओं ब्रह्माण्यै नमः। ४. ओं माहेश्वर्यै नमः। ५. ओं चामुण्डायै नमः ६. ओं वाराह्यै नमः। ७. ओं इन्द्राण्यै नमः ८. ओं अम्बिकायै नमः। ९. ओं क्लीँ सर्वलोकनिखिलपापक्षयाय ब्रह्मबीजस्वरूपाय दिव्यतेजसे दिव्यस्वरूपाय नमः। इति सम्पूज्य तज्जलेन महिषं स्नापयेत्। ततः ओं महिषाय नमः। इत्यनेन पञ्चोपचारैः महिषं सम्पूज्य ओं ऐँ ऐँ ह्रीँ ह्रीँ श्रीँ श्रीँ हूँ हूँ वरुणमण्डलाधिष्ठितविग्रहायै महिषरूपचण्डिकायै इमं महिषं प्रोक्षयामि स्वाहा॥ इति महिषं सम्प्रोक्ष्य—ओं युवासुवासाः परिवीत आगात् स उच्छ्रेयान् भवति जायमानः। तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥ इति मन्त्रेण वस्त्रं दत्त्वा शृङ्गमध्ये सिन्दूरमलक्तकं पटसूत्रं च दद्यात्॥ ततो रक्तमालां गृहीत्वा—ओं महिषासुरयुद्धेषु त्वयापि कामरूपिणा। चित्रं तनुत्रयं धृत्वा कृतं युद्धं सुदारुणम्। अतस्त्वद्वलिदानेन तुष्टा भवतु चण्डिका॥ ओं महिषस्त्वं महाभाग धर्मवाहनविश्रुतः। प्रियं धान्यं धनं देहि धर्मञ्चैव स्वभावतः॥ यथा वाऽर्घं भवान् द्वेष्टि यथा वहसि चण्डिकाम्। तथा मम रिपून् हंसि शुभं वह लुलायक॥ यमस्य वाहनस्त्वं तु वररूपधरोऽव्यय। आयुर्वित्तं यशोदेहि कासाराय नमो नमः॥ इदं रूपं परित्यज्य गन्धर्वत्वमवाप्नुहि। ललाटे ते शिवो देवः शृङ्गयोः पार्वतीप्रियः। दुर्गायाः प्रीतिदत्तो हि शतं वर्षाणि निश्चितम्॥ इति मालां दत्त्वा प्रणम्य महिषाङ्गे अङ्गदेवताः पूज्याः, तद्यथा ब्रह्मरन्ध्रे—ओं ब्रह्मणे नमः। नासिकायां–दामिन्यै नमः। कर्णयोः–आकाशाय नमः। जिह्वायां–सर्वमुखाय नमः, चक्षुषोः–ज्योतिर्भ्यां नमः। मुखे–विष्णवे नमः। ललाटे–चन्द्रमसे नमः। दक्षगण्डे–शक्राय नमः। वामगण्डे–वह्निहृदयाय नमः। ग्रीवायां–सोमवर्तिने नमः। केशाग्रे–निर्ऋतये नमः। भ्रूमध्ये—प्रचेतसे नभः। नासामूले–श्वसनाय नमः। स्कन्धे–धनेश्वराय नमः। हृदये–सर्पराजाय नमः। इति पञ्चोपचारैः पूजयेत्। ततः स्तम्भं पञ्चोपचारैः सम्पूज्य पुष्पाञ्जलिमादाय—ओं स्तम्भ त्वं स्थाणुरूपोऽसि ब्रह्मणा निर्मितः पुरा। अतस्त्वां पूजयाम्यद्य पशुबन्धनहेतवे॥ स्तम्भ-





मूले वसेद् ब्रह्मा स्तम्भमध्ये च माधवः। स्तम्भाग्रे च स्वयं रुद्रस्तस्मात् त्वमचलो भव॥ यथाऽचलो गिरिर्मेरुहिमवांश्च यथाऽचलः। यथाऽचला नगाश्चाऽन्ये तथा त्वमचलो भव॥ सर्वे देवाः सगन्धर्वाः सयक्षोरगराक्षसाः। तव सान्निध्यमायान्ति तस्मात्त्वमचलो भव॥ ततः ओं पाशाय नमः इति पञ्चोपचारैः पाशं सम्पूज्य प्रार्थयेत्—ओं पाश त्वं वरुणाज्जातः सदा वरुणदैवतः। अतस्त्वां पूजयाम्यद्य तस्माच्छान्तिं प्रयच्छ मे॥ त्वं साक्षी भगवान् देवः सर्वशत्रुनिबर्हणः। पूज्योऽसि सर्वभूतानां पाशसिद्धिं कुरुष्व मे॥ ततः कुशत्रयतिलजलान्यादाय सार्वदिक्दुर्गाप्रीतिसेव्येश्वरकर्तृकसम्मानसदायुद्धविजयदीर्घायुष्ट्वपुत्रपौत्रादिसमृद्धिसर्वविधसौमनस्यप्राप्तिकामोऽमुं महिषं यमदैवतं साङ्गसायुधसवाहनसपरिवारश्रीदुर्गादेवीप्रीतये घातयितुमहमुत्सृज्ये। इत्युत्सृज्य पुष्पाञ्जलिमादाय—ओं असुरयोनिप्रसूतोऽसि पूजाहोमादिकर्मणि। तुष्टा भवतु सा देवी समांसै रुधिरैस्तव॥ कुरु मम रिपुनाशं काम्यसिद्धिं च ऋद्धिं, हर हर मम दुःखं सर्वपापं कुबुद्धिम्। भवतु तव वधो मे भक्तितः पूजितस्य, कुरु भुवि मम सिद्धिं सर्वयज्ञव्रतानाम्॥ ततो महिषस्य कर्णे जपेत्—ओं पशुपाशाय विद्महे विश्वकर्मणे धीमहि। तन्नो महिषः प्रचोदयात्॥ ततः ओं ह्रीँ श्रीँ निखिलब्रह्माण्डखण्डरूपं बलिं गृह्ण गृह्ण स्वाहा॥ इति मनसा बलिं देव्यै समर्प्य ओं खड्गाय नमः। इत्यनेन पञ्चोपचारैः खड्गं सम्पूज्य प्रणमेदनेन—ओं असिर्विशसिनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपाल नमोस्तु ते॥ ततः ॐ एँ श्रीँ इमं महिषं महामोक्षं कुरु कुरु गृह्ण गृह्ण स्वाहा। इत्यनेन महिषग्रीवायां खड्गस्पर्शं कुर्यात्। ततोऽञ्जलिं बद्ध्वा प्रार्थयेत्—ओं खड्गपातोद्भवं दुःखं विनिर्जित्य पशूत्तम। देवीवरप्रसादेन मामात्मानं च तारय॥ ततः 'ओं क्रीँ फट्' इति मन्त्रेण खड्गं गृहीत्वा—ॐ दैवे पत्रे च सुभगः खड्गस्त्वं खड्गसन्निभः। छिन्धि विघ्नान् महाभाग ग्रहानन नमोऽस्तु ते॥ अनेन बलिकर्त्रे खड्गं समर्पयेत्। ततो महिषं छित्वा छागपशुवत् समांसरुधिरं शिरश्च निवेद्य दक्षिणां कुर्यात्। ओं अद्य कृतैतन्महिषबलिदानप्रतिष्ठार्थमेतावद्द्रव्य-

मूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। ओं स्वस्तीति प्रतिवचनम्।

## अथ हवनविधिः

सति सम्भवे महाष्टम्यां महानवम्यां च पूजान्ते यथोक्तकल्पेन शतचण्डीविधानेन वा होमं (१) कुर्यात्। तद्यथा—होता कुण्डस्थण्डिलं कुशैः परिसमूह्य गोमयेनोपलिप्य तत्र प्रागग्रा उदगग्राश्च तिस्रो रेखाः कुशमूलेनोल्लिख्य ताभ्यः मृदमुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेण अग्निमुपसमाधाय पञ्चोपचारैः सम्पूज्य पठेत्—ओं जगद्धात्रि महामाये सर्वशत्रुक्षयङ्करि। होमद्रव्यं गृहाणाऽम्ब वह्न्यास्येन महेश्वरि॥ इति प्रणम्य समिद्धतमेऽग्नौ—ओं भूः स्वाहा, इदं भूः। ओं भुवः स्वाहा, इदं भुवः। ओं स्वः स्वाहा, इदं स्वः इति व्याहृतित्रयेण हुत्वा—१ ओं दुर्गे दुर्गे रक्षिणि रक्षिणि स्वाहा। २ ओं ह्रीँ दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै ह्रीँ भद्रकाल्यै नमः स्वाहा॥ ३ ओं अम्बे अम्बिके अम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीं स्वाहा॥ ४ ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते, स्वाहा॥ इति मन्त्रचतुष्टयेन, अन्यतमेन वा ओं ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे' इति नवार्णमन्त्रेण वा घृतमधुक्षीराक्तैस्तिलैरष्टोत्तरशतम् (असमर्थश्चेद्यथासंख्यकं वा) आहुतीर्हुत्वा पूर्णाहुतिं दद्यादनेन—ओं मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः, स्वाहा। ओं दुर्गे दुर्गे रक्षिणि रक्षिणि स्वाहा। ततस्त्र्या-

---

(१) रुद्रयामले—प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा। किंशुकैः सर्षपैः पूगैर्लाजादूर्वाङ्कुरैरपि॥ यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा। रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः॥ प्रतिश्लोकं च जुहुयात् सर्वद्रव्याणि च क्रमात्। नवाक्षरेण वा हुत्वा नमो देव्यै इतीति च॥



युषं कुर्यात्। तद्यथा—स्रुवेण भस्मानीय दक्षिणानामिकागृहीतभस्मना—ओं त्र्यायुषं जमदग्नेः, इति ललाटे। ओं कश्यपस्य त्र्यायुषम्, इति ग्रीवायाम्। ओं यद्देवेषु त्र्यायुषम्, इति दक्षिणबाहुमूले। ओं तन्मेऽस्तु त्र्यायुषमिति हृदि। ततो दक्षिणा—ओं अद्य कृतैतद्धोमकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। ओं स्वस्तीति प्रतिवचनम्।

## अथ महानवम्यां सायं कृत्यम्

तत्र कृतनित्यक्रियः पुष्पाञ्जलिं दत्त्वा प्रदक्षिणीकृत्य दण्डवत्प्रणम्य भक्त्या स्तुवीत—ओं आयुर्देहि यशो देहि भाग्यं भगवति देहि मे। पुत्रान्देहि धनन्देहि सर्वान्कामान्प्रदेहि मे॥ प्रचण्डे पुत्रदे नित्यं सुप्रीते सुरनायिके। कुलोद्द्योतकरे चोग्रे जयन्देहि नमोस्तु ते॥ उग्रचण्डे प्रचण्डासि प्रचण्डबलनाशिनि। नमस्ते सर्वदा देवि विश्वेश्वरि नमोस्तु ते॥ दुर्गोत्तारिणि दुर्गे त्वं सर्वासुरनिषूदिनि। धर्मार्थमोक्षदे देवि नित्यम्मे वरदा भव॥ दुर्गे देवि महाभागे त्राहि मां शरणागतम्। महिषासृङ्मदोन्मत्ते प्रणतोऽस्मि प्रसीद मे॥ हर पापं हर क्लेशं हर शोकं हराऽशुभम्। हर रोगं हर क्षोभं हर मानं हराप्रियम्॥ कालि कालि महाकालि कालिके पापहारिणि। धर्मकामप्रदे देवि नारायणि नमोस्तु ते॥ संग्रामे विजयन्देहि धनन्देहि सदा गृहे। धर्मकामार्थसम्पत्तिं देहि देवि नमोऽस्तु ते॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। आयुरारोग्यविजयन्देहि देवि नमोस्तु ते॥ आयुर्ददातु मे काली पुत्रानपि सदा शिवा। अर्थकामौ महामाया विभवं सर्वमङ्गला॥ शिरो मे चण्डिका पातु कण्ठं पातु सुरेश्वरी। हृदयं पातु चामुण्डा सर्वतः पातु कालिका॥ ब्रह्माणी चैव कौमारी वाराही वैष्णवी तथा। माहेश्वरी नारसिंही चेन्द्राणी शिवदूत्यपि॥ महाकाली च चामुण्डा भैरवी कौशिकी तथा। उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका॥ चण्डा चण्डवती चैव ह्यतिचण्डा च चण्डिका। एताश्चान्याश्च रुद्राणि यास्ते तिष्ठन्ति शक्तयः॥ ताभिस्सहैव मां रक्ष संग्रामे सङ्कटे

तथा। नानापुराणवाक्येन नानादेवर्षिभाषितैः॥ सदा शिवाज्ञया चापि त्वमेव शरणम्मम। त्वां विहाय न चान्य वै संश्रये तेवतां शिवे। अतः परं यदुचितं तत्कर्तुं मातरर्हसि। आध्याकुलञ्च दारिद्र्यं रोगं शोकञ्च दारुणम्॥ बन्धुस्वजनवैराग्यं दुर्गे त्वं हर दुर्गतिम्॥ राज्यन्तस्य प्रतिष्ठां च लक्ष्मीस्तस्य सदा स्थिरा। प्रभुत्वन्तस्य सामर्थ्यं यस्य त्वं मस्तकोपरि॥ धन्योऽहं कृतकृत्योऽहं सफलं जीवितम्मम। आगतासि यतो दुर्गे माहेश्वरि ममालयम्। अर्घ्यं पुष्पञ्च नैवेद्यं धूपं दीपं बलिन्तथा। गृहाण वरदे देवि कल्याणं कुरु सर्वदा॥ इति स्तुत्वा प्रणम्य जलमादाय ओं मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्। पूर्णम्भवतु तत्सर्वन्त्वत्प्रसादान्महेश्वरि॥ ग्रहीतुं शारदीं पूजां मर्त्यमण्डलमागताम्। चण्डिके त्वान्नमाम्यद्य पूजेयं प्रतिगृह्यताम्॥ कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम। अन्तश्चरसि भूतानां ज्ञात्री त्वं सर्वसाक्षिणि॥ इति देव्यै पूजां समर्पयेत्। तत आरार्त्तिकं विधाय नृत्यगीतवाद्याद्युत्सवादिना रात्रि क्षपेत्॥ इति महानवमीकृत्यम्।

## अथ दशमीकृत्यम्

तत्र प्रातः कृतनित्यक्रियः पर्ववद्यथाविधि पूजां विधाय (१) बलिदानं विनैव 'ओं जयन्ती मङ्गला काली इति जयन्तीं छित्वा दण्डवत् प्रणम्य—ओं दुर्गां शिवाम् (पृ० १६६) इत्यादिभिः स्तुत्वाऽञ्जलिम्बद्ध्वा ओं महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यविजयं देहि देवि नमोस्तु ते॥ ओं रूपन्देहि जयन्देहि भाग्यं भगवति देहि मे। धर्मां देहि धनन्देहि सर्वान्कामान्प्रदेहि मे॥ ओं कुंकुमेनेत्यादि (पृ० १६०) सर्वमङ्गलमाङ्गल्ये इत्यादिना च संप्रार्थ्य—ओं विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्। पूर्णम्भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि॥ शक्नुवन्ति न ते

---

(१) केचिदत्र प्रस्तुतपूजायाः अनङ्गत्वेपि देविविसर्जनात् प्रागेव अपराजितापूजामाचरन्ति। वस्तुतस्तु नृपतिरेवात्र अपराजितापूजामाचरेदिति गुरुचरणाः। अपराजितापूजा १८३ पृष्ठे द्रष्टव्या।



पूजां कर्तुं ब्रह्मादयः सुराः। अहं किं वा करिष्यामि मृत्युधर्मा नरोऽल्पधीः॥ न जानेऽहं स्वरूपं ते न शरीरं न वा गुणम्। एकामेव हि जानामि भक्तिन्त्वच्चरणाब्जयोः॥ ताम्भक्तिं हृदि सम्भाव्य शारद्यर्चां प्रगृह्य च। गच्छ देवि निजं स्थानं मह्यन्दत्त्वा वरान्बहून्॥ इति संप्रार्थ्य पुष्पं गृहीत्वा—ओं चण्डेश्वर्यै नमः, ओं निर्माल्यवासिन्यै नमः इत्यैशान्यां क्षिपेत्। ततो देव्याः चरणं स्पृष्ट्वा—ओं कालि कालि महाकालि कालिके पापनाशिनि। कालीकरालि निष्क्रान्ते कालिके त्वान्नमोस्तु मे॥ सिंहवाहिनि चामुण्डे पिनाकधरवल्लभे। उपहारं गृहीत्वैवं प्रसीद परमेश्वरि॥ उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य मे। कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह॥ गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके। यत्पूजितं मया देवि परिपूर्णन्तदस्तु मे॥ गम्यतामर्थलाभाय क्षेमाय विजयाय च। शत्रोर्दर्पविनाशाय पुनरागमनाय च॥ व्रज त्वं स्रोतसि जले मद्गेहे तिष्ठ भूतये। आगामिवत्सरे च त्वं पुनरायास्यसि ध्रुवम्॥ ओं गच्छन्तु देवताः सर्वा दत्त्वा मे वरमीप्सितम्। त्वं गच्छ परमेशानि सुखं सर्वगणैः सह॥ ओं ह्रीं साङ्गसायुधसपरिवारभगवति श्रीदुर्गे देवि पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ। एवम् ओं लक्ष्मि पूजितासि प्रसीद मयि रमस्व। ओं सरस्वति पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ। ओं गणेश पूजितोसि प्रसीद०। ओं कार्तिकेय पूजितोसि प्र०। ओं जये पूजितासि प्र०। ओं विजये पूजितासि प्र०। ओं सिंह पूजितोसि प्र०। ओं महिष पू०। ओं मूषिक पू०। ओं मयूर पू०। ओं नवपत्रिकास्थदेव्यः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत। ओं कलशस्थावाहितदेवताः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत। इति प्रत्येकं विसृज्य ओं ह्रीं चामुण्डे चल चल चालय चालय हूं फट् स्वाहा इत्यनेनोत्थाय नृत्यगीतादिनोत्सवपुरस्सरं जलाशयं नीत्वा—ओं दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते। संवत्सरव्यतीते तु पुनरागमनाय वै॥ इमां पूजां मया देवि यथाशक्ति निवेदिताम्। रक्षणार्थं समादाय व्रजस्व स्थानमुत्तमम्॥ इति पठित्वा जले प्रवाहयेत्। एवमन्याः प्रतिमा अपि प्रवाहयेत्।

अथ पुनः पूजास्थानमागत्य(१) कुशत्रयतिलजलान्यादाय—ओं अद्याश्विनशुक्लप्रतिपदमारभ्य दशमीं यावत् कृतैतच्छरत्कालीनसाङ्गसायुधसवाहनसपरिवारश्रीदुर्गादेवीपूजनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथा-नामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे ॥ इति दक्षिणां दत्वा शान्तिकलशमुत्थापयेदनेन—ओं उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवासचा ॥ इति । ततो वक्ष्यमाणमन्त्रैर्यजमानमभिषिञ्चेत् ।

## अथाऽभिषेकमन्त्राः

कलशजलेन पञ्चपल्लवैरभिषेकं कुर्यात् । तद्यथा—ओं सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोग्निर्भगवान् यमो वै निरृ तिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहितश्शेषो दिक्पालाः पान्तु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृ ति-र्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानव-गन्धर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । ओषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराश्शैलास्ती-र्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ओं शान्तिः शान्तिः शान्तिः ।

---

(१) अत्रैव भूयसीं कुर्यात् । तद्यथा—कुशत्रयतिलजलान्यादाय—ॐ अद्य कृतैतत्साङ्गसायुधसवाहनसपरिवारशर-त्कालीनश्रीदुर्गापूजाकर्मणि न्यूनाधिककर्मदोषशमनार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां दातुमहमुत्सृज्ये ।



## अथ अपराजितापूजाविधिः

अत्र सङ्कल्पः—कुशादिकमादाय—ओं अद्याश्विने मासि शुक्ले पक्षे विजयदशम्यां तिथौ अमुकगोत्रस्याऽमुकशर्मणः यात्रायां विजयकामोऽपराजितापूजनमहं करिष्ये । इति सङ्कल्प्य-एकस्मिन् पात्रे चन्दनादिना अष्टदल-पद्मविलिख्य तत्र दूर्वाहरिद्रासहितापराजितालतां स्थापयित्वा अष्टदलमध्ये-ओं भूर्भुवः स्वर्भगवति श्री अपराजिते इहागच्छ इह तिष्ठेत्यावाह्य पुष्पमादाय—ओं चतुर्भुजां पीतवसनां सर्वाभरणभूषिताम् । शुद्धस्फटिकसंकाशां चन्द्र-कोटिमुशीनलाम् ॥ वरदाऽभयहस्तां च पीतवस्त्रैरलंकृताम् । नानाभरणसंयुक्तां चक्रवाकैश्च वेष्टिताम् ॥ इदं ध्यान-पुष्पम् ओं भगवति श्री अपराजितायै नमः । इति यथोपचारैः सम्पूज्य—ओं क्रिये इहागच्छ० क्रियायै नमः । ओं उमे इहागच्छ० उमायै नमः । ओं जये इहागच्छ० जयायै नमः । ओं विजये इहागच्छ० विजयायै नमः । इत्यनेन पञ्चोपचारैः पूजयेत् । ततोऽपराजितालतामभिमन्त्रयेदनेन—ओं सदाऽपराजिते यस्मात्त्वं लतासूत्तमा स्मृता । सर्वकामार्थसिद्ध्यर्थं तस्मात्त्वां धारयाम्यहम् ॥ भवाऽपराजिते देवि मम सर्वसमृद्धये । पूजितायां त्वयि श्रेयो ममाऽस्तु दुरितं हतम् ॥ इत्यभिमन्त्र्य—ओं जयदे वरदे देवि दशम्यामपराजिते । धारयामि भुजे दक्षे जयलाभाभिवृद्धये ॥ इति अभिलषितकामनावाप्तिपूर्वकयात्राविजयकामनया दक्षिणकरे धारयेत् । ततः समाचारादस्त्राणि सम्पूज्य खड्ग-मादाय ओङ्कारमुच्चारयन् प्रदक्षिणीकृत्य प्रणम्य—

ओं इमां पूजां महादेवि यथाशक्ति निवेदिताम् ।
रक्षणाय समादाय व्रज स्वस्थानमुत्तमम् ॥

ओं साङ्गसायुधसपरिवारभगवति श्री अपराजिते पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
एवमन्या अपि विसृज्य दक्षिणां दद्यात्—

ॐ अद्य कृतैतत्साङ्गसायुधसपरिवार—श्री अपराजितापूजनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । ॐ स्वस्तीति प्रतिवचनम् ।

इत्यपराजितापूजाविधिः (१) ।

इति शारदीयदुर्गापूजापद्धतिः ।

---

(१) विजयदशम्यां सीमोल्लङ्घनविधिः । भविष्ये—

श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः । उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो जनाः ॥

तत्रैव शमीपूजनमप्युक्तं—शमीयुक्तं जगन्नाथ भक्तानामभयङ्करम् । अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः ॥

तत्र मन्त्रः—अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च । दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥

पुनश्च भविष्ये—शमी शमयते पापं शमी लोहितकण्टका । धारिण्यर्जुनवाणानां रामस्य प्रियवादिनी ॥

करिष्यमाणयात्रायां यथाकालं सुखं मया । तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥

गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् । गीतवादित्रनिर्घोषैरानयेत् स्वगृहं प्रति ॥

ततो भूषण-वस्त्रादि धारयेत् स्वजनैः सह ॥

शमीपूजनविधिः वैष्णवानां शा० दुर्गापूजनान्ते १९० पृष्ठे द्रष्टव्यः ।

# अथ वैष्णवानां शारदीयदुर्गापूजापद्धतिः

## अथ कलशस्थापनविधिः

तत्र देवगृहस्येशानभागे सुलिप्तायां सुशोभितायां भूमौ चतुरस्रचतुर्हस्तवेदिकोपरि सर्वतोभद्रादिमण्डलं विलिख्य कदलीस्तम्भसुवितानादिशोभितं यथासम्भवं विधाय बीजप्ररोहणयोग्यां मृत्तिकां किञ्चित् यवबीजं पञ्चरत्न-पञ्चपल्लव पञ्चगव्य-दूर्वा-फल-ताम्बूल-कुंकुम-वस्त्र-नैवेद्य-धूप-दीपादिसम्भारान् यथाशक्ति सम्पादयेत् ।

अथ यजमानः प्रतिपदि प्रातरभ्यङ्गं कृत्वा मण्डपसमीपे आसने प्राङ्मुख उदङ्मुखो वा उपविश्य दीपं प्रज्वाल्य आचम्य पवित्रपाणिः प्राणानायम्य आत्माग्रे चन्दनेन शंखचक्रे लिखित्वा 'ओं आधारशक्तये नमः ।' इत्याधारशक्ति पञ्चोपचारैः सम्पूज्य तत्रार्घ्यपात्रं संस्थाप्य शुद्धजलेन आपूरयेदनेन—

ओं गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेस्मिन् सन्निधिं कुरु ॥

ततो गन्धपुष्पादि तूष्णीं क्षिपेत् । ततः पूजासङ्कल्पः—ओं अद्य शरदृतौ आश्विने मासि शुक्ले पक्षे प्रतिपदि शुभपुण्यतिथौ (१)'अमुकगोत्रोऽहं सकुटुम्बस्य ममेह जन्मनि' श्रीमहामायाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकदीर्घायुर्विपुल-धनपुत्रपौत्राद्यविच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीशत्रुजयकीर्तिलाभप्रमुखचतुर्विधपुरुषार्थसिद्ध्यर्थमद्यप्रभृति - महानवमी-पर्यन्तं प्रत्यहं शारदीयमहोत्सवं करिष्ये, तत्रादौ कलशस्थापनं करिष्ये । ततः—ओं मही द्यौः पृथिवी च न इमं

---

(१) ग्रामपूजायां तु—'अमुकगोत्रोऽहं······जन्मनि' इत्यस्य स्थाने—"एवद्ग्रामवासिनां नानानाम् गोत्रणां सकल-जनानामेतत्पूजोपकारकाणामन्यद्ग्रामवासिनां इह जन्मनि' इति योज्यम् ।

यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ इति भूमिं स्पृष्ट्वा तदुपरि अङ्कुरारोपणार्थं शुद्धमृदं प्रक्षिप्य—ओं ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳराजन् पारयामसि ॥ इति । तत्र किञ्चिद् यवानुदकसंस्थान् क्षिप्त्वा तदुपरि किञ्चिद् मृत्तिकां दत्त्वा पुनः किञ्चिद् यवान् पञ्चवारं सप्तवारं वा क्षिप्त्वा तद्योग्यां मृत्तिकां बीजमिश्रां पुनर्दद्यात् । एवं बीजवापनं विधाय वेद्यां दिक्षु कोणेषु च काण्डरोपणादिनाऽऽभरणं विधाय तत्रैशाने कलशं स्थापयेदनेन—ॐ आजिघ्र कलशं मह्या त्वा व्विशन्त्विन्दवः । पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥ इति अव्रणं दध्यक्षतचन्दनमालार्चितं कलशं स्थापयेत् । ततः—ओं वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनी स्थो व्वरुणस्यऽ ऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ॥ इति गङ्गादितीर्थजलेनापूरयेत् । ततो गन्धप्रक्षेपः—ओं गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ इति । ततो दूर्वाप्रक्षेपः—ओं काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ ततः सर्वौषधीनां हरिद्रायां वा प्रक्षेपः—ओं याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनो नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ इति । ततः पूगीफलादिप्रक्षेपः—ओं याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ततो गव्यं पयः—ओं पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ततो गव्यं दधि—ओं दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य व्वाजिनः । सुरभि नो मुखाकरत् प्रणऽआयूꣳषि तारिषत् ॥ ततो गव्यं घृतम्—ओं घृतवती भुवनानामभिश्रियोर्व्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा व्विष्कभितेऽअजरे भूरिरेतसा ॥ ततः पञ्चपल्लवप्रक्षेपः—ओं अश्वत्थे वो निषदनं पर्णे वो व्वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ततः सप्तमृत्प्रक्षेपः—ओं स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ ततः पञ्चरत्नानि—ओं परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्



दधद्रत्नानि दाशुषे ॥ ततो हिरण्यम्—ओं हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा व्विधेम ॥ ततो वस्त्रम्—ओं यदश्वाय वासऽउपस्तृणन्त्यधीवासं या हिरण्या न्यस्मै । सन्दानमर्वन्तं षड्वीशं प्रिया देवेष्वायामयन्ति ॥ ततः कलशोपरि धान्यपूर्णपात्रं स्थापयेदनेन—ओं पूर्णा दर्व्वि परा पत सुपूर्णा पुनरापत । व्वस्नेव विक्रीणावहाऽइषमूर्जं शतक्रतो ॥ ततोऽक्षतैर्वरुणावाहनम्—ओं तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो व्वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ ततः सर्वतीर्थावाहनम्—सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ततः कलशाभिमन्त्रणम्—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ततः कलशप्रार्थना—देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि वेदाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ओं स्थिरा भव मीढ्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहनः ॥ ततः ओं भूर्भुवः स्वः ब्रह्मवरुणसहितादित्यादिनवग्रहा अस्मिन् कलशे सुप्रतिष्ठिता वरदा भवन्तु । 'ॐ ब्रह्मवरुणग्रहेभ्यो नमः' इति मन्त्रेण गन्धाक्षतपुष्पधूपदीपनैवेद्यैः सम्पूज्य तत्र कलशोपरि कुलदेवताया नवदुर्गाया वा प्रतिमां पूगीफलेषु नवदुर्गां वा प्रतिष्ठाप्य पूजयेत् । स्वस्थाने एव वा संस्थाप्य पूजयेत् । अथवा नवां सौवर्णीं कुलदेवताप्रतिमां प्राणप्रतिष्ठापूर्वकं प्रतिष्ठाप्य पूजयेत् ।

## अथ दुर्गापूजाविधिः

तत्र ओं 'मनोजूतिः०' इत्याद्यन्ते ओं भूर्भुवः स्वः भगवति दुर्गे इहागच्छेह तिष्ठेह सन्निधेहि स्थिरा सुप्रसन्ना सुप्रतिष्ठिता भव। इति प्राणप्रतिष्ठां विधाय ध्यायेत्—ओं या माया मधुकैटभप्रमथिनी या माहिषोन्मूलिनी, या धूम्रेक्षणचण्डमुण्डमथनी या रक्तबीजाशनिः। शक्तिः शुम्भनिशुम्भदैत्यदलनी या सिद्धिलक्ष्मीः परा, सा दुर्गा नवकोटि-मूर्तिसहिता मां पातु विश्वेश्वरी॥ आवाहनम्—ओं आवाहयाम्यहं देवि सर्वकामार्थसिद्धये। अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु॥ ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते॥ आसनम्—ओं नानाप्रभासमाकीर्णं नानावर्णविचित्रितम्। आसनं कल्पितं देवि प्रीत्यर्थं प्रतिगृह्यताम्॥ पाद्यम्—ओं गङ्गादिसर्वतीर्थेभ्य आनीतंतोयमुत्तमम्। पाद्यं तेऽहं प्रदास्यामि गृहाण परमेश्वरि॥ अर्घ्यम्—ओं गन्धाक्षतैश्च संयुक्तं फलपुष्पयुतं शुभम्। अर्घ्यं गृहाण दत्तं मे प्रसीद परमेश्वरि॥ आचमनीयम्—ओं गङ्गागोदावरीरेवा-यमुनाभ्यः समाहृतम्। मयाचनीयार्थं सुशीतं तोयमुत्तमम्॥ पञ्चामृतस्नानम्—ओं पञ्चामृतं मयानीतं पयोदधि-समन्वितम्। घृतं मधु शर्करया प्रीत्यर्थं प्रतिगृह्यताम्॥ शुद्धोदकस्नानम्—ओं ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि। स्नानं गृहाण देवि त्वं नारायणि नमोऽस्तु ते॥ वस्त्रम्—ॐ सूक्ष्मतन्तुसमाकीर्णं नानावर्णविचित्रितम्। वस्त्रं गृहाण मे देवि प्रीत्यर्थं तव निर्मितम्॥ उत्तरीयम्—ॐ उत्तरीयं महादिव्यं पट्टसूत्रादिनिर्मितम्। समानीतं मया देवि प्रीत्यर्थं प्रतिगृह्यताम्॥ गन्धः—ओं मलयाद्रिसमुद्भूतं कर्पूरागुरुवासितम्। मया निवेदितं भक्त्या प्रीत्यर्थं प्रतिगृह्यताम्॥ अक्षताः—ओं अक्षताश्च सुरश्रेष्ठाः कुङ्कुमेन समन्विताः। मया निवेदिता भक्त्या प्रीत्यर्थं प्रतिगृह्यताम्॥ पुष्पाणि—ओं मन्दारः पारिजातश्च पाटलो केतकी तथा। मालती मोगरं चैव शतपत्राणि चम्पकम्॥ मया निवेदितं भक्त्या प्रसीद परमेश्वरि।

अथाङ्गपूजा—ओं दुर्गायै नमः पादौ पूजयामि १, महाकाल्यै० गुल्फौ० २, मङ्गलायै० जानुनी० ३, कात्या-



यन्यै० ऊरू० ४, भद्रकाल्यै० कटिं० ५, कमलायै० नाभिं० ६, शिवायै० उदरं० ७, क्षमायै० हृदयं० ८, स्कन्दायै० कण्ठं० ९, महिषासुरमर्दिन्यै० नेत्रे० १०, उमायै० शिरः० ११, विन्ध्यवासिन्यै० सर्वाङ्गं० १२। धूपः—ॐ दशाङ्गं गुग्गुलुं धूपं चन्दनागुरुसंयुतम्। मया निवेदितं भक्त्या गृहाण परमेश्वरि॥ दीपः—ॐ आज्यं सर्द्वातिसंयुक्तं वह्निना दीपितं मया। दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहम्॥ नैवेद्यम्—ॐ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्। भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम्॥ तत आचमनीयम्। ततः प्राणादिमुद्राः प्रदर्श्य क्षणं ध्यात्वा यथाशक्ति मूलमन्त्रजपं विधाय गुह्यातीति देव्या दक्षिणाधोहस्ते समर्प्य नैवेद्यमुद्वास्य 'ॐ दुर्गायै नमः' इति आचमनीयं समर्प्य करोद्वर्तनं दद्यात्—ॐ मलयाचलसम्भूतं कस्तूर्यादिसमन्वितम्। करोद्वर्तनकं देवि गृहाण परमेश्वरि॥ ततः फलम्—ॐ इदं फलं मया देवि स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥ ताम्बूलं—ॐ पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्। कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥ अलङ्काराः—ॐ अलङ्करान् महादिव्यान् नानारत्नविनिर्मितान्। गृहाण देवदेवि त्वं प्रसीद परमेश्वरि॥ दक्षिणा—ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ ततः छत्रचामरपादुकादर्पणान् 'साङ्गायै सपरिवारायै सवाहनायै सायुधायै श्रीभगवत्यै महासरस्वत्यै नमः' इति समर्पयेत्।

अथ नीराजनम्—ॐ अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्। आरार्तिकमिदं देवि गृहाण मम सिद्धये॥ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च। त्वमेव सर्वज्योतींषि आरार्तिः प्रतिगृह्यताम्॥ प्रदक्षिणा—ॐ यानि कानि च पापानि जन्मान्तरकृतानि वै। तानि सर्वाणि नश्यन्तु प्रदक्षिण पदे पदे॥ ततः पुष्पाञ्जलिः—ॐ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते॥ ततः पूजनान्ते—ॐ अखण्डदीपकं देव्याः प्रीतये नवरात्रकम्। उज्ज्वालयेदहोरात्रमेकचित्तो धृतव्रतः॥ इति मन्त्रेणाऽखण्डदीपं प्रतिष्ठाप्य प्रज्वाल्य पूज-

येत् । ततः पूर्वसङ्कल्पितं स्वकुलाचारानुसारेण चण्डीपाठादि कुर्यात्, ब्राह्मणद्वारा वा कारयेत् ।

## अथ कुमारिकापूजनविधिः

ओं मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ॥ जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि । पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥ इति मन्त्राभ्यां कुमारीं सम्पूज्य नानाभक्ष्यभोज्यचूष्यलेह्यादिभिः सम्भोज्य आचमय्य तद्धस्तेषु अक्षतान् दद्यात् । कुमारी च तानक्षतान् यजमानशिरसि दध्यात् । ततः कर्मेश्वरार्पणं कुर्यात् ।

( एवं च षष्ठीपर्यन्तं प्रत्यहं पूजयेत् । तत्र पूजां कृत्वा द्वितीयायां देव्यै केशसंयमनार्थं पट्टडोरकम्, तृतीयायां चरणरागार्थमलक्तम्, शिरसि धारणार्थं सिन्दूरं, मुखविलोकनार्थं दर्पणम्, चतुर्थ्यां मधुपर्कं, रौप्यतिलकं (टिकुली), नेत्रार्थं कज्जलम्, पञ्चम्यां चतुःसमालेपनं, यथाशक्त्यलङ्करणं च समर्पयेत् । सायं प्रातः पुष्पाञ्जलिं च प्रत्यहं दद्यात् । सङ्कल्पवाक्येषु प्रत्यहं उक्ततिथ्युल्लेखः कर्तव्यः । )

## अथ षष्ठ्यां बिल्वाभिमन्त्रणविधिः

तत्राश्विनशुक्लषष्ठ्यां ज्येष्ठानक्षत्रयुतायां केवलायां वा सायङ्काले बिल्ववृक्षे देवीबोधनं निमन्त्रणं च ।

तत्प्रयोगः—अर्घ्यं सम्पाद्य शुचिर्भूत्वा फलसंयुतबिल्ववृक्षसमीपमागत्य यथाविधि अर्घ्यं संस्थाप्य पूजासङ्कल्पं कुर्यात् । ओं विष्णुः ३ अद्येत्यादि अमुकोऽहं श्रीदेवीबोधनाङ्गत्वेन श्रीवृक्षस्य पूजनं निमन्त्रणं च करिष्ये । ओं बिल्ववृक्षाय नमः' इति नाममन्त्रेण बिल्ववृक्षं सम्पूज्य 'ओं जयन्ती' इत्यादि पठित्वा 'श्रीदुर्गे इहागच्छ' इत्यादि वा दुर्गामावाह्य सम्पूज्य गीतवाद्यघोषपुरःसरं देवीं बोधयेत् । तत्र मन्त्रः—ओं रावणस्य वधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥ इषे मासि सिते पक्षे षष्ठ्यां ज्येष्ठानुयोगतः । श्रीवृक्षे बोधयामि त्वां



यावत्पूजां करोम्यहम् ॥ ततो बिल्वतरोरामन्त्रणम्—ओं मेरुमन्दरकैलासहिमवच्छिखरे तथा । जातः श्रीफलवृक्षस्त्वमम्बिकायाः सदा प्रियः ॥ श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः ॥ इत्यामन्त्र्य गृहमागच्छेत् ।

## अथ महासप्तम्यां पत्रिकापूजनविधिः

ततः सप्तम्यां प्रातर्नित्यकृत्यान्ते निमन्त्रितवृक्षसमीपमागत्य पुनः सम्पूज्य कृताञ्जलिः प्रार्थयेत्—ओं बिल्ववृक्ष महाभाग सर्वदा शङ्करप्रिय । गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् । शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो ॥ ततः 'ओं छिन्धि फट् ओं हुँ फट् स्वाहा' इति मन्त्रेण फलद्वययुतामपराजितादिग्गतामेकां शाखां छेदयेत् । तत्र मृन्मयप्रतिमाया शाखायां च देवीमावाहनपुरःसरं सम्पूज्य सप्रतिमां शाखां दोलादिना गृहमानीय भूतोत्सादनं विधाय देवस्थाने कलशादिसन्निधौ स्थापयेत् । तत्र मन्त्रः—ओं आरोपिताऽसि दुर्गे त्वं मृन्मये श्रीफलेऽपि च । स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव ॥ ततः प्राणप्रतिष्ठां विधाय ओं दुर्गायै नमः इति ध्यायेत् । तत आवाहनम्—ओं आवाहयाम्यहं देवि मृन्मये श्रीफलेऽपि च ॥ कैलासशिखराद् देवि विन्ध्याद्रेर्हिमपर्वतात् ॥ आगत्य बिल्वशाखायां चण्डिके कुरु सन्निधिम् ॥ भगवति दुर्गे इहागच्छेत्युभयोरावाह्य स्थापनम्—ओं स्थापिताऽसि मया देवि मृन्मये श्रीफलेऽपि च । आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥ भगवति दुर्गे इह तिष्ठेति संस्थाप्य कृताञ्जलिः पठेत्—ओं दुर्गे दुर्गस्वरूपाऽसि सुरतेजोमहाबले । सदानन्दकरे देवि प्रसीद मम सिद्धये ॥ एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे । भक्तितः पूजयामि त्वां दुर्गे देवि नमोऽस्तु ते ॥ पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः । पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे ॥ दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय । यज्ञभागान् गृहाण त्वं योगिनीकोटिभिः सह ॥

ततः ( १८८ पृष्ठोक्त ) पूर्वोक्तप्रधानदुर्गापूजाविधिना पुष्पपूजान्तं सम्पूज्य बिल्वपत्रं समर्पयेत्—

ओं अमृतोद्भववृक्षोत्थं शङ्करस्य सदा प्रियम् । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥ द्रोणपुष्पार्पणमन्त्रः—ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम् । तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये ॥ पुनः पूर्वोक्ताङ्गपूजादि नीराजनान्तं सम्पूज्य प्रार्थयेत्—

ओं कुङ्कुमेन समालब्धे चन्दनेन विलेपिते । बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः ॥ सर्वमङ्गल० रूपं देहि० इति च प्रार्थयेत् । एवमेव नवम्यन्तं पूजयेत् ।

## अथ पुस्तकेषु सरस्वतीस्थापनविधिः

तत्र प्रातः कृतनित्यक्रियो मूलनक्षत्रे पुस्तकानि संस्थाप्य ओं विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मूलनक्षत्रे पुस्तकेषु सरस्वत्या आवाहनं पूजनं च करिष्ये । ॐ 'मनोजूतिः' इति पठित्वा ॐ भूर्भुवः स्वः सरस्वति देवि इहागच्छ इह तिष्ठ सुप्रतिष्ठिता वरदा भव । ध्यानम्—ॐ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता, या वीणावर-दण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता, सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ श्री सरस्वत्यै नमः । आवाहनम्—ॐ भूर्भुवः स्वः भुवनमातः सरस्वति सर्ववाङ्मयरूपेणागच्छेह तिष्ठ पूजां गृहाण । 'ॐ श्रीसरस्वत्यै नमः' इति मन्त्रेण आसनादिनीराजनान्तं सम्पूज्य प्रार्थयेत् । ॐ दोर्भियुक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना, हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण । या सा कुन्देन्दु-शङ्खस्फटिकमणिनिभा भासमाना समाना, सा मे वाग्देवतेयं निवसतु वदने शारदा शुभ्रवर्णा ॥ यस्य स्मृत्या० इति कर्मेश्वरार्पणम् । ततः पूर्वाषाढोत्तराषाढानक्षत्रयुक्तद्वितीयतृतीयदिनयोरपि आवाहनरहितं सर्वं पूर्ववत्पूजनं कुर्यात् । ततः श्रवणदिने—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रवणेन विसर्जनं कर्तुं तदङ्गभूतां पूजां करिष्ये । इति संकल्प्य पूर्ववत्संपूज्य विसर्जयेत् ।



## अथ महाष्टम्यां पूजाबलिदानविधिः

ततो व्रती कृतनित्यक्रियः ओं विष्णुः ३ अद्येहेत्यादि महाष्टम्यां शुभपुण्यतिथौ अमुकोऽहं महाष्टमीव्रताङ्गत्वेन श्रीदुर्गादेव्या यथामिलितोपचारैः पूजनं करिष्ये । इति संकल्प्य पूर्वोक्तविधिना महापूजां विधाय बलिदानं कुर्यात्—ओं विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रीचण्डिकाप्रीतये बलिदानं करिष्ये । इति संकल्प्य कूष्माण्डबलिं वस्त्रवेष्टितं गन्धादिभिः सम्पूज्य—ओं कूष्माण्डो बलिरूपेण मम भाग्यादुपस्थितः । प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥ चण्डिकाप्रीतिदानेन दातुरापद्विनाशन । चामुण्डाबलिरूपाय बले तुभ्यं ददाम्यहम् ॥ ऐं ह्रीं श्रीं इति मन्त्रेण बलि-मूर्ध्नि पुष्पं दद्यात् । श्रीफलादिसत्त्वे श्रीफलं बलिरूपेण इत्याद्यूहः कार्यः । 'ओं ह्रीं ऐं ह्रीं कौशिक कूष्माण्डरसेना-प्यायताम् । इति निवेदयेत् ।

## अथ हवनविधिः

तत्र नवम्यां पूजां विधाय पूर्वोक्तशारदीयदुर्गापूजाहवनविधिना अग्निं संस्थाप्य होमः कार्यः । तद्विधिश्च डामरतन्त्रे—पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् । होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तमः ॥ रुद्राध्याये यथा होमं मन्त्रेणैकेन साधयेत् । तथा स्तोत्रजपे होमं श्लोकेनैकेन साधयेत् । यद्वा सप्तशतीं जप्त्वा होममन्त्रो नवाक्षरः ॥ रुद्रयामलेऽपि—प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा । किंशुकैः सर्षपैः पूगैर्लाजादूर्वाङ्कुरैरपि ॥ यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा । रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः ॥ प्रति श्लोकं च जुहुयात् सर्वद्रव्याणि च क्रमात् । नवाक्षरेण वा हुत्वा नमो देव्या इतीति च ॥ इति । स च नवार्णमन्त्रेण जयन्तीत्यादिश्लोकेन नमो देव्यै श्लोकेन सप्तशतीश्लोकैर्वा यथाकुलाचारं कार्यः । होमद्रव्यं सर्पिर्मिश्रितं च पायसम्, केवलं तिलां वा । किंशु दूर्वासर्षपलाजपूगयवश्रीफलरक्तचन्दनखण्डनानाविधफलानामपि पायसे मिश्रणं कार्यम् । होमश्च जपदशांशेन

## अथ दशम्यां देवीविसर्जनम्

तत्र मृदादिप्रतिमाया विसर्जनपूर्वकं जलादौ त्यागः। परम्परया पूजिताया धातुप्रतिमायास्तु केवलमुत्थापनं कार्यं, न तु विसर्जनम्। तत्र प्रातः पूर्ववत्पूजयित्वा—ॐ रूपं देहि यशो देहि भाग्यं भगवति देहि मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते॥ इति संप्रार्थ्य—ॐ उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च। कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह॥ गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके। व्रज स्रोतोजलं वृद्धयै स्थीयतां च जले त्विह॥ इत्युत्थाप्य जलं नीत्वा—ॐ दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिता। संवत्सरे व्यतीते तु पुनरागमनाय वै॥ इमां पूजां मया देवि यथाशक्त्युपपादिताम्। रक्षार्थं त्वं समादाय व्रज स्वस्थानमुत्तमम्॥ इति जले प्रवाहयेत्। तत आचार्यादीन् वस्त्रादिभिः सम्पूज्य अच्छिद्रं वाचयित्वा भूयसीं दक्षिणां च विभज्य दत्त्वा तान् भोजयित्वा स्वयमपि भुञ्जीत। अथ श्रवणे सरस्वतीविसर्जनम्। तद्विधिः संग्रहे--आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम्। मूलेनावाहयेद् देवीं श्रवणेन विसर्जयेत्॥ श्रवणाद्यपादे विसर्जयेदिति। ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रवणे पुस्तकेष्वावाहितसरस्वती-विसर्जनं कर्तुं तदङ्गभूतां पूजां करिष्ये इति संकल्प्य सम्पूज्य विसर्जयेत्।

## अथ दशम्यामपराजितापूजा

तत्र ऐशान्यां शुचिदेशे भुवमुल्लिख्य तत्र चन्दनादिना अष्टदलमालिख्य-ओमद्येत्यादि मम सकुटुम्बस्य क्षेम-सिद्धयर्थमपराजितापूजनं करिष्ये। इति सङ्कल्प्य मध्ये—ॐ अपराजितायै नमः। इत्यपराजितामावाह्य तद्दक्षिणे—ॐ क्रियाशक्त्यै नमः। इति जयाम्, वामतः—ओं उमायै नमः। इति विजयां चावाह्य ओं अपराजितायै नमः,



ॐ जयायै नमः, ॐ विजयायै नमः, इति नाममन्त्रैः यथोपचारपूजां कृत्वा प्रार्थयेत् —ॐ इमां पूजां मया देवि यथाशक्ति निवेदिताम्। रक्षार्थं तु समादाय व्रज स्वस्थानमुत्तमम्॥

ततः सीमामुल्लंघ्य सीमान्ते ऐशान्याभिमुखाः—ॐ अपराजितायै नमः ओं जयायै नमः, ओं विजयायै नमः, इति नमस्कुर्युः। ततः सर्वे जना ग्रामाद् बहिः ईशानदिगवस्थितां शमीं गत्वा पूजयेयुः।

## अथ शमीपूजनविधिः

तत्र ओमद्येत्यादि मम दुष्कृतामङ्गलनिरासार्थं च शमीपूजनं करिष्ये। इति संकल्प्य—अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च। दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम्॥ शमी शमयते पापं शमी लोहितकण्टका। धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी॥ करिष्यमाणयात्रायां यथाकालं सुखं मया। तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते॥ इति सम्प्रार्थ्य यथोपचारैः पूजयेत्।

शमीवृक्षाऽलाभे अश्मन्तकपूजा कार्या। तत्र—'ॐ अश्मन्तकाय नमः' इति नाममात्रेण यथोपचारैः सम्पूज्य प्रार्थयेदनेन—

ओं अश्मन्तक महावृक्ष महादोषनिवारण। इष्टानां दर्शनं देहि शत्रूणां च विनाशनम्॥

ततः साक्षतामार्द्रां शमीं गृहीत्वा तन्मूलमृदं च गृहीत्वा गीतवादित्रघोषपुरस्सरं गृहमानयेत्।

इति वैष्णवानां शारदीयदुर्गापूजाविधिः।

---